# प्रयोजनम् ।

संस्कृतरचनार्थं विद्यार्थिनां सम्यङ्मार्गदर्शिका नात्र उपलब्धा दृष्टा। तदा एव श्रीमती नाथीबाई दामोदर ठाकरसी विद्यापीठेन बी. ए. तथा एम. ए. परीक्षायां संस्कृत-रचना-प्रश्नपत्रिका समावेशिता। अतः इदं पाठ्यपुस्तकं डॉ. प्रा. कमल अभ्यंकर इति विदुष्याः सहकार्येण विरचितम् । गुजराती-अनुवादे डॉ. प्रा. जसवंती दवे महोदयाभिरपि साहाय्यं कृतम् ।

अत्र प्रायः पदसन्धयः न अनुसृताः पठणसौकर्यार्थम् । तथैव पदवीद्वयकृते न स्वतन्त्रौ विभागौ परिकल्पितौ । तथा च गुजराती-अनुवादः अपि मुद्रण-सौकर्यार्थे नागरी-लिप्यामेव निर्दिष्टः । सार्वत्रिक-अध्ययनोद्देशेन अनुवादे हिन्दी तथा आंग्ली भाषे अपि उपयोजिते ।

प्राध्यापकैः इदमवधारणीयमत्र । एकोद्देशेन उद्धृताः पाठाः उद्देशान्तरं सहन्ते । एवं सारांश-लेखनार्थे मुद्रितानां पाठानां मातृभाषानुवादेऽपि प्रयोगः साधनीयः । एवमितरत्र अपि ज्ञेयम् ।

संस्कृते अनुवादार्थे मातृभाषायां पाठा न अत्र मुद्रिताः। अध्यापकैः ते वाङ्मयात् उन्नेयाः । यदन्यत् किंचन परीक्षार्थे पुरस्कृतं तत् अत्र समाविष्टम् । तथा निबन्धलेखनम् (Essay-Writing), पत्रलेखनम् (Letter writing), संस्कृत-पाठावगमः(Comprehension), कथालेखनम् (Story writing), सारांशलेखनम् (Precis Writing), कल्पनाविस्तारः (Expansion of Ideas), तथा च मातृ-भाषायामनुवादः (Translation) इति ।

कानिचित्परिशिष्टानि ग्रथितानि । अध्यापकैः तत्र अवधानं दातव्यम् । रचनार्थे उपयुक्तसाहित्यमेव तत्र उद्धृतम् । अभिजातत्वं भाषायाः तेन साहित्येन साध्यम् ।

नेदं व्याकरणपुस्तकम् । न वा शब्दकोशः । मूलभूता पदसिद्धिः विद्यार्थिभिः आत्मसात् कृता अस्ति इति अत्र गृहीतकृत्यम् । तथैव वाक्यरचनायामपि ते निपुणाः इति मानितम् । कथं स्वविचाराः अखण्डितप्रवाहाः भाषाग्रथ्याः इति अत्र प्रस्तुतम् । तथैव अन्यस्य भाषणस्य अवधारणमपि । न केवलं शब्दश्रवणमेव । अतः किमत्र साध्यमिति छात्रैः गुरुभिश्च न विस्मर्तव्यम् ।

गुरुमुखेन एव शिक्षा ग्रहीष्यमाणा इत्यपि अत्र मनसि कृतम्। स्वतन्त्रतया अध्येत्रा निजकृतिः विमर्शनीया एव। नान्यथा प्रमादाः आविर्भवेयुः। न वा तेषां निरासः संभाव्यः।

परिशिष्टानि कानि अभ्यंकर-महोदयया बहुप्रयत्नेन संकलितानि। अतः सा धन्यवादार्हा। संस्कृत-भाषाविभवः तत्र साक्षात्करणीयः। तत्र मया संस्करणं कृतमेव। मूलसंकलनं तु मम सहायायाः। गुजराती-अनुवादः डॉ. दवेमहोदयया प्रणीतः। तस्य नागरी-लिपि-संस्करणं मया अनुसृतम्। तथैव परिशिष्टेषु हिन्दी-आङ्ग्ली-अनुवादौ मया प्रणीतौ। तेन ग्रन्थस्य उपयुक्तता वर्धिष्यते इति विश्वासः।

नेदं केवलं विद्यापीठ-पाठ्य-पुस्तकम्। ये केचन संस्कृतभाषायां रचनां विधातुं समुत्सुकाः तान् प्रति इदं मार्गदर्शनं साह्यकरमेव भवेत्। तथैव आधुनिकजीवने यादृशं संस्कृतं लेखनीयं तस्यापि अत्र उपोद्घातः असंशयमुपकारक एव भवेत्।

संस्कृतरचना सर्वा सरला सुगमा सदा सुरूपा स्यात्।
इति ये प्रयत्नशीलाः तेषां शुभकामनाः समीहेऽत्र॥

२५ डिसेंबर १९७८ —श्री० भि० वेलणकर

द्वितीयं संस्करणम्।

इदं संस्करणं किंचिदधिकफलदायि। काचित् सामग्री च अत्र वृद्धिं नीता। विना विलम्बं सुष्ठु मुद्रणं मौज मुद्रणालयेन कृत, अतः तेभ्यः धन्यवादान् समर्पये। द्वितीयसंस्करणं शीघ्रमेव अवश्यमभूत् इति संस्कृतप्रेमिणः अपि धन्यवादार्हाः। एकं परिशिष्टं डॉ. दवेमहोदयया विरचितं तस्य निर्देशः कृतोऽस्ति तत्र।

श्री० भि० वेलणकर

१-७-१९८१

# विषयानुक्रमः।

परिशिष्टानि ।

# निबन्ध-लेखनम् ।

## १-१. मुम्बापुर्यां वर्षाकालः ।

मानवः इव निसर्गः न अलसः न स्वच्छन्दः वा । सृष्टिचक्रं खलु अतीव नियमितम् । नियतसमये नियतं वातावरणं, नियताः घटनाः प्रायः भवन्ति एव । ग्रीष्मर्तुः समाप्तप्रायः । वातावरणमतितप्तम् । मुम्बापुर्यां गृहे गृहे विद्युद्वीजनानि भ्रमन्ति एव । उपाहारगृहेषु जनाः शीतपेयेभ्यः अतीव स्पृहयन्ति । छात्राणामवकाशः भवति इति महद् भाग्यमेव एतत् । सर्वे एव वर्षाकालं चातका इव प्रतीक्षन्ते । प्रति-आपणं छत्राणि तथा जलसंरक्षकावरणानि (रेनकोट-पदवाच्यानि) दृष्टिपथम् आयान्ति । सर्वे वर्षायाः स्वागतार्थं सज्जीभवन्ति । किन्तु वर्षा नैव सम्मुखी ।

तदा एव अकस्मात् कस्मिंश्चित् सायंकाले यदा सर्वे जनाः अनवहिताः तथा कार्यालयव्यग्राः एव भवन्ति, तदा महत्या मेघगर्जनया सार्धं वर्षा मुम्बापुरीं प्रधावति । ईदृग्-रभसा सा वर्षति यत् अल्पावकाशे एव निखिला मुम्बापुरी जलमयी भवति, अत्यल्पकाले एव रेलमार्गाः जलप्लुताः भवन्ति, अग्निरथाः घटिका यावत् घटिकाद्वयं यावत् वा स्वस्थानात् पुरतः न निःसरन्ति च । येषां सर्वे कुटुम्बिनः गृहे एव वर्तन्ते तैः वर्षायाः आनन्दमनुभवितुं शक्यते, किन्तु अस्यां वेलायाम् अगणिताः मुम्बापुरीवासिनः गृहाद् बहिः एव भवन्ति । तेन 'कदा नु खलु ते प्रत्यागच्छन्ति' इत्यनया चिन्तया कुटुम्बिन्यः व्याकुलाः भवन्ति । क्वचित् वर्षा मुम्बापुर्याम् ईदृशीं कृपादृष्टिं करोति, यद् द्वित्रिदिनानि यावत् सा नैव विरमति । पाठशालायाः अवकाशप्राप्तिकारणात् बालकानां कृते तु एषः प्रमोदकाल एव । किन्तु अग्रे वयसि अतिवर्षा न प्रमोदयति खलु । मुम्बापुर्यां जीर्णवास्तूनां कृते तु वर्षाकालः साक्षात् कालः एव । तत्रस्थाः जनाः ननु व्याकुलाः, वर्षापगमनस्य प्रतीक्षां कुर्वन्तः कथमपि कालम् अतिवाहयन्ति

ईदृशी स्वच्छन्दचारिणी दुष्टा च एषा वर्षा यत् मुम्बापुरीवासिनामवकाशकालं मन्दवासरं रविवासरं च सा अवश्यमेव विफलयति । अत इदानीं जनाः गृहस्थाः

एव भूत्वा दूरदर्शनं प्रेक्षन्ते। क्वचित् अपरिमितां वृष्टिं कृत्वा अन्तर्हिता एषा एव वर्षा मासार्धं यावत् पुनश्च मुखमपि न दर्शयति। तदा न केवलं जलाशयानां जलं शुष्यति अपि तु जनानां मुखजलमपि नष्टं भवति। अनावृष्टेः निर्विण्णाः जनाः पुनश्च वर्षां प्रार्थयन्ते।

इन्द्रधनुषः सौन्दर्यास्वादः मुम्बापुरीवासिभिः क्वचिदेव अनुभवितुं शक्यते। तथा वर्षाकालीने सृष्टिसौन्दर्यदर्शनेऽपि अत्रस्थाः जनाः वञ्चिताः एव।

---

## १-२. कविकुलगुरुः कालिदासः।

कविकुलगुरुः कालिदासः संस्कृतसाहित्यसाम्राज्यस्य मूर्धाभिषिक्तः सम्राट् खलु वर्तते। पौर्वात्यपाश्चिमात्यविद्वद्भिः सः खलु अतीव गौरवितः दृश्यते। 'उपमा कालिदासस्य' 'कविकुलगुरुः कालिदासो विलासः', 'क इह रघुकारे न रमते' इत्यादयः कालिदासविषयिण्यः सूक्तयः अपि सर्वविश्रुताः एव। कविश्रेष्ठः कालिदासः 'भारतवर्षस्य शेक्सपीयरः' इत्यपि वर्ण्यते। किन्तु दुर्दैववशात् एतादृशस्य महात्मनः कवेः विश्वसनीयं चरित्रं किमपि न उपलभ्यते तस्य विनयशालित्वात्। तस्मात् प्राक्कालीनः इतिहासः, शिलालेखाः, ताम्रपटाः, विश्रुताः दन्तकथाः, आख्यायिकाश्च इत्येतानि एव कालिदासचरित्रज्ञानार्थं साधनानि समुपलब्धानि। अतः पर्याप्तप्रमाणानाम् अभावात् कालिदासजीवनस्य एकस्मिन्नपि विषये विदुषां न मतैक्यं दृश्यते। तस्य कुलम्, पितरौ, जन्मस्थानं, जन्मकालः, गुरुः, तस्य ग्रन्थसंपत्तिः इत्येते सर्वेऽपि विषयाः विवादग्रस्ताः एव।

एकमस्ति तस्य सबलं कारणम्। यत् प्राचीनकाले कालिदासनामानः नव कवयः जाताः, तथा कविश्रेष्ठः कालिदासः यस्य सभाकविः आसीत्, तस्य विक्रमादित्यस्य नामधारिणः अपि पञ्च राजानः अभवन्। तेन कः कालिदासः 'रघुकारः' तथा कः विक्रमादित्यः तस्य आश्रयदाता च इत्येतस्य सुलभत्वेन अनिर्धारणकारणात् अयं विवादः समुपस्थितः।

किन्तु इदानीं विद्वद्भिः अखण्डिताभ्यासेन केचित् निर्णयाः स्वीकृताः सन्ति। कालिदासः खिस्ताब्दस्य चतुःपञ्चशतकमध्ये विक्रमादित्यस्य गुप्तस्य सभाकविः आसीत्। यद्यपि तस्य जन्मस्थानं न निश्चीयते, तथापि तेन कृतेभ्यः उज्जयिन्याः सूक्ष्मवर्णनेभ्यः तस्य बहुंशः जीवनकालः तत्रैव व्यतीतः अभवत् इति निश्चितमेव। यद्यपि कालिदासनाम्ना विपुला ग्रंथसंपत्तिः उपलभ्यते, तथापि

'रघुवंशम्', 'कुमारसंभवम्' चेति द्वे महाकाव्ये, 'मालविकाग्निमित्रम्' 'विक्रमोर्वशीयम्', 'अभिज्ञानशाकुन्तलम्' चेति त्रीणि नाटकानि, 'मेघदूतं' नाम खण्डकाव्यं, तथा 'ऋतुसंहारम्' नाम वर्णनपरं लघुकाव्यम् इत्येषा काव्यसंपत् तु निश्चितत्वेन रघुकारस्य कालिदासस्यैव भवति। अन्तर्गतप्रमाणानि अपि तत्र पुष्टिकराणि एव।

भाषाप्रभुः खलु कविः कालिदासः। मधुरा, सरला वैदर्भी रीतिः तेन अङ्गीकृता। तस्य साहित्ये दुर्गमाः कष्टकराः प्रदीर्घसमासाः प्रायः न दृश्यन्ते एव। पात्रानुरूपा शैली इत्येतत् तस्य उल्लेखनीयं वैशिष्टयम् अस्ति। सः उपमाप्रभुः वर्तते एव। तेन विविधक्षेत्रेभ्यः समुचितोपमानानां यथार्थप्रयोगः कृतः इति दृश्यते। अपराणाम् अलङ्काराणां प्रयोगम् अपि सः समर्थतया करोति। किन्तु कुत्रापि अलङ्काराणां बहुप्रयोगात् तेन कविताकामिन्याः सुरूपं न विप्रक्रियते।

कमपि उदात्तं जीवनदृष्टिकोणं स्वीकृत्य तेन स्वसाहित्यकृतिभिः स्ववाचकेभ्यः मधुरं पाथेयमेव दत्तमिति प्रतीयते।

मानवमनसः सूक्ष्म-अभ्यासकः आसीत् किल सः। तस्य 'अभिज्ञानशाकुन्तलम्' न केवलं कालिदासकृतिषु अपि तु निखिलसंस्कृतवाङ्मयसृष्टौ श्रेष्ठतममेव। तस्य सौंदर्यपानेन रवीन्द्रनाथगटेशेलेप्रभृतयः रसिकश्रेष्ठाः मोहिताः, उन्मत्ताः इति समीचीनमेव एतत्। मानवमनसः यथार्थचित्रकरत्वात् तस्य, यावच्चन्द्रदिवाकरौ सः रसिकमानसराजहंसः भविष्यति एव इति नात्र कोऽपि संदेहः।

---

## १-३. संस्कृतमहत्त्वम्।

'भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती' इत्येतत् सुभाषितं कस्य न परिचितम्? संस्कृतभाषा 'सुरभारती' तथा सर्वासां भाषाणां जननी इत्यनेन रूपेण गौरविता दृश्यते। तस्याः एतद् गौरवं समीचीनमेव।

संस्कृतभाषा प्राचीनतमा खलु। अस्माकं पूर्वजैः आर्यैः सृष्टिमातुः नानाविधान् चमत्कारान् वीक्ष्य उद्गारिताः दिव्याः प्रार्थनामन्त्राः देववाणीमयाः एव। संस्कृतसाहित्यभाण्डारं च अनन्तं तथा अनुपमं खलु वर्तते। यावच्छशिदिवाकरौ चिरस्थायिनौ रामायणमहाभारतप्रबन्धौ, गटेशेलेप्रभृतीन् परकीयरसिकानपि

उन्मादयितृ कालिदाससाहित्यं, "अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्" ईदृक् प्रभावपूर्णं करुणम् 'उत्तररामचरितम्', वैदग्ध्यपरिप्लुतम् ओजोगुणसंपन्नं बाण-दण्डि-साहित्यं, संस्कृतवाङ्मयस्य प्राणभूतानि, नीतिं पोषयन्ति, सन्मार्गं दर्शयन्ति पञ्चमहाकाव्यानि, खण्डकाव्यानि, लघुकाव्यानि च संस्कृतवाङ्मयं संपन्नं कुर्वन्ति खलु। भक्तिरसपूर्णानि सरसस्तोत्राणि अपि अतीव उल्लेखनीयानि। बालानां हितबोधाय नीतिकथानामपि समृद्धिः अत्र वर्तते।

संस्कृतवाङ्मयवृक्षस्य केवलं ललितशाखा एव न संपन्नाः; किन्तु विविधशास्त्र-शाखा अपि भिन्नभिन्नविचारपुष्पैः प्रफुल्लिताः खलु। व्याकरण-मीमांसा-तत्त्वज्ञान-गणित-भूमिति-ज्योतिः-आयुर्वेद-स्थापत्यादिषु शास्त्रेषु अस्माकं पूर्वजाः कियत् प्रगताः इत्यस्य एते ग्रन्थाः सम्यक् निदर्शनं खलु भवन्ति। सर्वभारतीयशास्त्राणां विकासेतिहासं ज्ञातुम् एतेषां ग्रन्थानां परिशीलनं अत्यावश्यकं खलु भवेत्। भारतवर्षस्य प्राक्कालीनेतिहासं, यज्ञेतिहासं, तत्कालीनां समाजस्थितिं च अवगन्तुं प्राचीनसंस्कृतग्रन्थानामध्ययनम् अपरिहार्यमेव। परकीयविद्वांसः अपि एनां वस्तुस्थितिं ज्ञात्वा संस्कृतभाषायाः अध्ययनम् अत्यावश्यकं मन्यन्ते, तदवगन्तुं प्रयतन्ते च।

संस्कृतभाषा न केवलं द्राक्षामधुरा अपि तु अतीव संपन्ना अपि। तथाकथित-समृद्धायां आंग्लभाषायां जलवाचकः केवलं 'वॉटर' इत्येकः एव शब्दः वर्तते। किन्तु संस्कृतभाषायां प्रतिशब्दार्थं विविध-अर्थच्छटापरिपूर्णाः अनेके शब्दा सिद्धाः। एतादृशं महत् शब्दभाण्डारं धारयन्तः अमरकोषादयः नैककोषग्रन्थाः विस्मयावहाः खलु।

भारतीयभाषाणाम् अस्मिन् उत्कर्षकाले सर्वेषां विषयाणां परिभाषाकोषाः अपि अपेक्ष्यन्ते। तेषां निर्माणे संस्कृतभाषा एव मूलाधारः भवति। आबाल्याद् वाणीं संस्कर्तुं सा एव समर्था भवति। उदात्तैः तत्त्वज्ञानविचारैः सा एव मनःसमाधानं साधयति। सर्वाः एव भारतीयभाषाः अस्याः एव भाषाजनन्याः स्तन्यपानं कृत्वा सौष्ठवं गताः इति सर्वेषां संमतम्।

अतः संस्कृतस्य उपेक्षा न कदापि क्षन्तव्या भवेत्। यस्माद् अद्यापि अस्यां भाषायां साहित्यनिर्माणं भवति, तथा जनाः अस्यां भाषायां वाग्व्यवहारं कर्तुमपि समर्थाः, सिद्धाश्च। तेन 'संस्कृतं मृतभाषा' इत्येतत् वक्तव्यमपि निराधारमेव।

यद्यपि न एषा राष्ट्रभाषा, तथापि राष्ट्रभाषामपि समर्थतरां कर्तुं समर्था एषा

गीर्वाणवाणी। अतः प्रत्येकभारतीयस्य संस्कृतम् अभिमानविषयः खलु। न खलु तत् उपेक्षणीयम्, अपि तु अभ्यसनीयमेव।

---

## १·४ नीतिशतकम्।

राजा भर्तृहरिः स्वयं पण्डितः कविः विरागी च इदं ग्रन्थं प्रणीतवान् इति सर्वैः संमन्यते। न तु तस्य कालः स्थानं वा सप्रमाणं निश्चितमद्यापि। शतकत्रयं तेन विरचितं शृङ्गारशतकं, नीतिशतकं, वैराग्यशतकं च इति संप्रदायमतम्। वैराग्यशतककविर्न शृङ्गारशतककर्ता इत्यपि विवादः पण्डितेषु श्रूयते।

नीतिशतके शतावधिश्लोकाः नीतिमधिकृत्य। यद्यपि नीतिशब्देन प्रायः राजनीतिरेव अभिप्रेता तथापि अस्मिन् ग्रन्थे नीतिशब्देन समाज-आचार-रीतिरपि अभिप्रेता। सा एव श्लोके श्लोके पद्ये पद्ये च चित्रिता।

बहूनि वृत्तानि बहवो अलंकाराश्च प्रयुक्ताः। शार्दूलविक्रीडितवृत्तस्य प्राधान्यम्। तथा अप्रस्तुतप्रशंसा, या अन्योक्तिरित्यपि उच्यते सा अलंकारेषु प्रधाना। प्रतिपद्यं स्वतंत्र एव विषयः। स्वतन्त्र एव अनुभवः। जीवने ये अनुभवा महार्हाः तेषां माला एव अत्र ग्रथिता।

एकस्मिन् पुष्पे कविरुद्गिरति। साहित्यसंगीतकला-विहीनः साक्षात्पशुः पुच्छविषाणहीनः इति। अन्यत्र,—'आरभ्यते न खलु विघ्नभयेन नीचैः प्रारब्धविघ्नविहता विरमन्ति मध्याः। विघ्नैः पुन पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजनाः न परित्यजन्ति' इति कार्यमनुलक्ष्य उत्तमपुरुषलक्षणं निर्दिश्यते। 'एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये' इत्यत्र स्वार्थपरार्थविषयानुसारेण उत्तममध्यमनीचवर्गीकरणम् अङ्गीकृतं जनानाम्। 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इत्यत्र उद्यमशीलस्य सिद्धिरिति प्रतिपादितं, तद्न्यत्र दैवबलं वर्णितम्—'यदि चातको जलं न लभते मेघस्य किं दूषणम्' इत्यादिवर्णने।

दशविषया अत्र उपन्यस्ता इति कविसंकेतः। अज्ञः, प्राज्ञः, सत्पुरुषः, दुर्जनः, इत्यादिविषयाः। कविकृतं वर्णनं तु उक्तिवैदग्ध्यात् प्रमोदावहम्। वैचित्र्याच्च सुखावहम्।

एकेन नीतिशतकग्रन्थेन एव अयं कविः अमरः अभविष्यत् इति परिशीलनात् प्रतीयते।

---

## १-५. अस्माकं काश्मीरयात्रा ।

काश्मीरं भारतस्य नन्दनवनम् । न केवलं भारतवासीया एव, अपि तु परकीयाः प्रवासिनः अपि तत्सौंदर्यं द्रष्टुम् सोत्कण्ठं आयान्ति इति आबाल्यात् श्रुतं पठितं च आसीत् । तेन गतवसन्त-ऋतौ यदा काश्मीरदर्शनस्य अवसरः सम्प्राप्तः तदा अत्यानन्दिता अभवम् अहम् । मासपूर्वम् एव जम्मू-तावी-एक्सप्रेसमध्ये आसन-शयनकृते आरक्षणं कृतम् आसीत् । तेन प्रवासविषये तादृक् चिन्ता न आसीत् । प्रारम्भे प्रसन्नवातावरणात् तथा अत्युत्साहकारणात् वार्तासम्भाषणे, विविधानां रुचिकराणां पदार्थानाम् आस्वादने च पूर्वाह्णसमयः शीघ्रं व्यतीतः । किन्तु शनैः शनैः वर्धमानातपकारणाद् वयं निर्विण्णाः निरुत्साहाश्च संजाताः ।: 'जम्मू-तावी' ईदृक्-वेगवती, यत् विना स्खलितं चलितुमपि न शक्यमासीत्, पठनस्य पुनः का कथा ? शनैः शनैः विविधान् प्रदेशान्, सस्यशामलानि क्षेत्राणि पश्चाद् विहाय वयम् अग्रे धाविताः । राजधानीदिल्लीदर्शने अस्माकं कुतूहलम् आसीत् । किन्तु रात्रौ द्वि-त्रि-वादने निद्राधीनतया तत्कुतूहलम् अपूरितमेव । अपरेद्युः प्रातः प्रायः सार्धदशवादने जम्मू-तावीस्थानकम् संप्राप्ता वयम् । चिरप्रवासेन क्लान्तत्वात् अस्माभिः तस्मिन् दिने जम्मूनगरे एव वास्तव्यं कृतम् । तत्र तु 'रघुनाथमन्दिरं' विहाय न किमपि परदर्शनीयम् आसीत् । अपरेद्युः प्रभाते एव बसयानेन अस्माकं श्रीनगरं प्रति प्रस्थानं कर्तव्यम् आसीत् । एष मार्गः अतीव विषमः, सुदूरः, द्वादशहोरावधिः । अस्माकं मनांसि किंचित् भयाकुलानि एव आसन् । किन्तु अहो आश्चर्यम् । तत्र पथि यत् अपूर्वं निसर्गसौंदर्यं दृष्टम्, तत् तु कल्पनातीतम् एव । निरन्तरा एकतः गगनं चुम्बन्तः अत्युच्चाः गिरयः, अन्यतः अतिप्रगाढाः दर्यः, इतस्ततः चारुगुलाबपुष्पाणि च । अतिदीर्घः, भुवः अधस्तात् गच्छन् 'जवा-हरसुरङ्गामार्गः' अपि अस्माभिः व्यतीतः । शनैः शनैः विलो-देवदारु-सफेदा-इत्यादिभिः अदृष्टपूर्वैः वृक्षैः आकृष्टाः वयम् । मार्गे दृष्टानि कश्मीरजक्षेत्राणि अपि दृष्टिं बध्नन्ति स्म । प्रदोषान्धःकारे श्रीनगरं प्रविष्टाः वयम् । श्रीनगरे एव वास्तव्यं कृत्वा, प्रतिदिनम् एकैकं निसर्गस्थानं द्रष्टुम् निश्चितम् अस्माभिः । अपरेद्युः श्रीनगरस्थानि शालिमारनिषादादीनि रमणीयानि उद्यानानि, दालवुलर-प्रभृतीनि अतिविशालानि सरांसि, श्रीमच्छंकराचार्याणां मन्दिरं, झेलमनद्याः मनोहरः उद्गमः, इत्यादीनि रम्यस्थलानि आपरितोषं दृष्टानि । दालसरोवरे 'शिकारा' नौकानयनानन्दः अपि अनुभूतः अस्माभिः । 'चिनार' सौंदर्येण तु

अहम् उन्मत्ता एव अभवम। तदनन्तरम् अनुदिनं 'गुलमर्ग-सोनमार्ग-पेहेलगाम' –प्रभृतीनि नितान्तरमणीयानि स्थलानि दृष्टानि। अश्वारूढा भूत्वा, हिमवृष्टौ गुलमर्गतः खिलनमर्गं प्रति गमनं एकः अपूर्वः अनुभवः आसीत्। 'पेहेलगाम' क्षेत्रं तु रमणीयतायाः परमावधिः इत्यस्मिन् न किमपि अत्युक्तिः। ईदृक् दुग्धधवलं, शीतलं, रुचिकरं जलं कदापि न दृष्टपूर्वम्। सत्यमेव निसर्गसौंदर्येण तथा मानवसौन्दर्येणापि ईदृक् रमणीयं काश्मीरक्षेत्रम् यत् मुम्बापुरीं प्रत्यागमनं प्रति निरुत्साहितानि एव अस्माकं मनांसि।

---

## १–६ भारतीय–राज्यघटना।

भारतेन १५–८–१९४७ दिने स्वातन्त्र्यं लब्धम्। स्वतन्त्रभारतस्य शासन-यन्त्रणा घटनासमित्या स्वीकृता। सा राज्यघटना २६–१–१९५० दिने कार्यवाहित्वं याता। तदनुसारेण मार्चमासे १९५२ तमे हायने प्रथमा लोकसभा राष्ट्रेण निर्वाचिता। इयं शासनयन्त्रणा प्रजासत्तास्वरूपा निर्वाचितप्रतिनिधिद्वारा।

अस्यां घटनायां चतुस्तत्त्वानि सारभूतानि स्वीकृतानि सर्वलोकधुरीणैः। प्रतिनरेण भारतीयप्रजाजनेन स्वविकासार्थं भेदविशेषरहितं साधनं स्वाधिकारेण लप्स्यते इति प्रथमं सूत्रम्। न्यायालये सर्वेषां स्थानं समानं स्यात्। न तत्र जातिधर्मवंशमतादिभेदानामवकाशः स्यात् इति द्वितीयं सूत्रम्। सर्वा भारतीयभाषाः समानत्वेन अभिवृद्धिं लभेरन् विना पक्षपातमिति तृतीयं सूत्रम्। नारी अपि सर्वक्षेत्रेषु नरेण समाना एव गण्येत इति चतुर्थं सूत्रम्। इयं चतुःसूत्री स्वराज्यस्य आधारभूता संमता।

घटकराज्यानि अपि प्रारंभे निर्दिष्टानि आसन्। तेषां संख्या कालान्तरेण वृद्धिं गता लोकसभासंमत्या। तथैव भारतीयभाषाणां अपि घटनायां निर्देशः आसीत्। तत्रापि संख्यावृद्धिः तथैव स्वीकृता कालगत्या।

सर्वे शासकाः जनैरेव निर्वाचनीया इति दण्डकः स्वीकृतः भारतीयजनैः घटनायाम्। घटकराज्यानि अपि केषुचन शासनविषयेषु स्वायत्तानि घटितानि। केन्द्रशासनस्य केचन शासनविषयाः निर्दिष्टाः, केचन अपरे राज्यानां, केचन च उभयोरपि। घटकराज्यानि अपि न एकप्रकाराणि। तत्र प्रायः राज्यपालः प्रतिराज्यं नियुज्यते राष्ट्रपतिना। किन्तु कुत्रचित् उपराज्यपालः एव नियोक्तव्यः। न तेषां संपूर्णराज्याधिकारः। अन्ये प्रदेशाः केन्द्रशासिताः एव च।

राष्ट्रपतिः उपराष्ट्रपतिश्च निर्वाच्येते। निर्वाचितसदस्येभ्यः केषांचन मन्त्रित्वेन नियुक्तिः केन्द्रशासने तथैव राज्येषु। राज्यानां विधानसभाः सन्ति। केषांचिद् विधानपरिषदः अपि सन्ति यथा केन्द्रशासने राज्यसभा। लोकशासनं संपूर्णं भवति लोकसभा राज्यसभा तथा राष्ट्रपतिः इति त्रिभिः संमेल्य एव। न कोऽपि विधिनियमः त्रीणां संमतिं विना बन्धकः भवति न वा न्यायालयैर्ग्राह्यः भवति। तथैव राज्येषु विधानसभा, विधानपरिषद्, राज्यपालश्च इति त्रीणां संमतिः अवश्या। विधिनियमानां पालनं अपालनं वा न्यायालयेषु सिद्धं भवति। तत्र उच्चन्यायालयं प्रतिराज्यम्। सर्वोच्चन्यायालयं केन्द्रराजधान्याम्।

**जयन्तु भारताः।**

---

## परिशिष्टम्। निबन्ध-लेखनार्थं विषयाः।

१. दैवेन देयमिति कापुरुषा वदन्ति। २. गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः। ३. यतो धर्मस्ततो जयः। ४. भारतीयसभ्यतायाः प्राचीनता विशेषाः च। ५. श्वः कार्यम् अद्य कुर्वीत। ६. अप्राप्तं नाम नेहास्ति धीरस्य व्यवसायिनः। ७. सहसा विदधीत न क्रियाम्। ८. शिक्षायाः माध्यमम्। ९. अहिंसा परमो धर्मः। १०. विद्याधनं सर्वधनप्रधानम्। ११. ऋतुराजः वसन्तः। १२. चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः। १३. हेमन्तः। १४. यथा राजा तथा प्रजा। १५. न हि ज्ञानेन सदृशं पवित्रमिह विद्यते। १६. अपि विज्ञानं वरः शापो वा? १७. कविकुलगुरुः कालिदासः। १८. माघे सन्ति त्रयो गुणाः। १९. जन्मभूमिः। २०. भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती! २१. संस्कृतभाषायाः महत्त्वम्। २२. एकस्मिन् दिने। २३. दारिद्र्यमरणयोः। २४. विद्वान् सर्वत्र पूज्यते। २५. सर्वेगुणाः काञ्चनमाश्रयन्ते। २६. ज्ञानं भारः क्रियां विना। २७. व्यासोच्छिष्टं जगत्सर्वम्। २८. महाकविः बाणभट्टः। २९. भारवेरर्थगौरवम्। ३०. सत्संगतिः कथय किं न करोति पुंसाम्? ३१. तस्मै श्रीगुरवे नमः। ३२. ध्येयो नारायणः सदा। ३३. संपत्तौ च विपत्तौ च महतामेकरूपता। ३४. पयःपानं भुजंगानां विषवर्धनम्। ३५. सत्यमेव जयते। ३६. सन्तः स्वयं परहितेषु कृताभियोगाः। ३७. नैराश्यं परमं सुखम्। ३८. काकोऽपि जीवति चिराय बलिं च भुंक्ते। ३९. मृत्युर्वै प्राणिनां ध्रुवः। ४०. संतोषतुल्यं धनमस्ति नान्यत्।

---

# २ पत्रलेखनम् ।

२–१

पुणे

दिनांकः १४–८–७८

महा-अधीक्षकः मध्यरेलव्यवस्था,

मुंबापुरी ।

महोदय,

मया मासद्वयपूर्वं भवतां व्यापारमंडलाध्यक्षः विज्ञापितः आसीत् एकस्मिन् विषये । प्रत्युतरम् अलभमानः भवन्तम् इदं पत्रं प्रेषयामि । मन्ये, अपि इदानीं समाधानकरं प्रत्युत्तरं लभेय इति ।

सत्यघटितम् इत्थमासीत् । १ जुलै तारकायां डेक्कनक्वीन-रेलयानेन मया मुंबापुरीं गन्तव्यमासीत् । मम आसनं प्रागेव मया द्वितीयश्रेण्याम् आरक्षितम् । तथापि प्रवेशनिषेधः सोढः मया । ममासने च अन्यः एव उपविष्टः । मम प्रवेश-पत्रिका २५१२३ क्रमाङ्का । सप्तमयानभागे पंचमम् आसनं मत्कृते आरक्षितम् । प्रवेशपत्रिका २९जूनदिने मया समधिगता । संशयं दृष्ट्वा यानपरीक्षकेण अनारक्षिते आसने अहम् उपवेशितः ।

अतः —

१. आरक्षणधनं मे प्रतिदेयम् । २. तथा च इयं दुःस्थितिः कथं समुद्भूता इत्यपि परीक्ष्य मह्यम् आवेदनीयम् । जानन्ति एव भवन्तः यदस्मिन् रेलयाने विना आरक्षणं न कोऽपि संप्रति प्रोषितुं समर्थः इति ।

उपरिनिर्दिष्टमेव यत् अन्याधिकारिणे लिखितपत्रं तत् नाद्यापि प्रत्युत्तरितम् अतः एव भवन्तं प्रार्थये दुरवस्थानिवारणार्थम् । पूर्वपत्रं मया ४-७-७८ दिने प्रेषितमासीत् ।

सत्वरं प्रत्युत्तरं प्रतीक्षमाणः

**अविनाश अडसुले**

५३२१ रास्तापेठ, पुणे २.

अहमदाबाद
दि. १७–८–७८

श्री गोपालदासश्रेष्ठिभ्यः जयपुरनिवासिभ्यः

स्वस्ति। गतमासे यदा आवां मिलितौ तदा जयपुरवसनानि क्रेतुमहम् उत्सुकः आसम्। भवद्भिः मासावधि न क्रयः कर्तव्यः इति उपदिष्टम्। तर्हि किमधुना क्रयानुकूलः कालः संपन्नः ननु। क्रयमूल्यं गतमूनतां यथा अपेक्षितमासीन्ननु। अस्माकम् आपणे जयपुरवसनानां दुर्लभत्वं प्रसृतम् अतो विक्रये लाभं पश्यामि। तर्हि सत्वरं शतवसनानि प्रेषणीयानि। यथापूर्वं मूल्यं प्रहिणुष्यामि। मार्गे तु तानि न मलिनतां विवरितां वा प्राप्नुवन्ति इति यतनीयम्। अग्निरथप्रेषणात् रथ्यायान-प्रेषणं सुष्ठुतरं स्यात्।

तथैव ये वर्णाः राजस्थाने स्वीक्रियन्ते तेभ्यः ईषत् सौम्यतराः अत्रत्येभ्यः रोचन्ते। तथा च वसनेषु चित्रावलिरपि नूतना एव भवितुमर्हति। न गतवर्षीया एव। पक्षिवृक्षादि बिन्दुरेखादि पुष्पपर्णादि च किंचित् तत्र रेखितव्यम्।

भवद्भिः प्रतिश्रुतं द्रव्यं जयपुर-धननिधि(Bank)तः नाद्यापि समधिगतम्। तर्हि देयधनपत्रं (Cheque) सत्वरं भवन्तः प्रेषयिष्यन्ति इति आशासे।

यदि एतस्मात् स्थानात् भूफलादि (Ground Nut) किंचित् विक्रयार्थम् इष्यते तद् ज्ञापनीयम्। आगामिनि मासे अहं पुनः जयपुरम् आयास्यामि इति संभवति। पूर्वमेव सूचनां यथाकालं दास्यामि एव। इति अलम्।

भवतां वशंवदः
**दामोदरदासः।**

---

## २-३ अवकाशार्थं प्रार्थनापत्रम् ।

कोल्हापुरतः
दि० ..................

माननीयाः प्राचार्यमहोदयाः
कृषिमहाविद्यालयः
कोल्हापुरम् ।

मान्यवर !

आगतसप्ताहात् अहं महाविद्यालये उपस्थातुम् असमर्था जाता। यतः गतसप्ताहे अहं ज्वरग्रस्ता अभवम्। डॉक्टरमहोदयैः 'विषमज्वर' इति निदानं कृतमस्ति। तीव्रौषधसेवनात्, अनाहारात् तथा अनारोग्यात् च अहम् अतीव दुर्बला जाता । अतः आगामिनि सप्ताहेऽपि महाविद्यालयमागन्तुम् अहं न प्रभविष्यामि । अनारोग्यप्रमाणपत्रम् अहम् अवश्यं प्रेषयिष्यामि । कृपया द्विसप्ताहावकाशं स्वीकृत्य माम् अनुग्रहीष्यन्ति भवन्तः इति आशासे।

भवताम् वशंवदा
........................
बी. ए. प्रथमवर्षम्

---

## २-४ सखीं प्रति पत्रम् ।

मैसूरतः
दि० ..................

मत्प्रियमालिनि,

सस्नेहं नमस्ते ।

बहुना किल कालेन अद्य पत्रलेखनम् आरब्धं मया। वस्तुतः इदानीम् अतीव श्रान्ता अहं प्रवासात्। किन्तु मनस्तु प्रफुल्लितमेव। अतः अस्मिन् पत्रलेखने न श्रमाः जायन्ते ।

गतभृगुवासरात् आरभ्य वयं सततं भ्रमणशीलाः इति त्वं जानासि एव। प्रायः नित्यं प्रतिदिनं नूतनस्थानप्रेक्षणं प्रचलति। किन्तु ईदृशः प्रमोदः मया न

कुत्रापि अनुभूतः। अद्य वयं सर्वे मैसूरपुरं दृष्टवन्तः। अत्रस्थानि राजगृहम्, चामुण्डादेव्याः देवालयः, वृन्दावनम् उद्यानम् इत्येतानि प्रेक्षणीयस्थलानि अस्मान् तोषयितुं अहमहमिकया स्पर्धन्ते स्म खलु। अत्रस्थः प्राणिसंग्रहालयोऽपि अनुपमः एव इति मे मतिः। अस्मिन् दक्षिण-भारतप्रवासे कतिपयदिनानन्तरम् अत्र किंचित् भोजनास्वादपरिवर्तनम् अपि अस्माभिः अनुभूतम्। निसर्गेणापि एतत्स्थलं बहु अनुगृहीतम् इति भासते। यदा अहं मुम्बापुरीं प्रत्यागमिष्यामि, तदा एतेषां प्रेक्षणीयस्थलानाम् छायाचित्राणि त्वम् अवश्यं प्रेक्षस्व। इदानीम् अतिश्रमात् निद्रा मां बाधते। अतः अलमतिविस्तरेण।

इहगतं सर्वं कुशलम्। तत्रस्थमपि सर्वं कुशलं भवेत् इति आशासे।

भवदीया शुभैषिणी

.....................

---

## २-५ वैद्यराजं प्रति रुग्णस्य पत्रम्।

महाबलेश्वरतः

दि० ..................

माननीयाः वैद्यमहोदयाः

सादरं प्रणामाः।

भवताम् आदेशानुसारम् इहागतस्य मम पञ्चदशदिनानि जातानि। अत्र अहं संपूर्णत्वेन विश्रांतिं लभे। तथा भवतामादेशमनुसृत्यैव च अस्निग्धलघु-आहारम् अहं भुनज्मि। प्रतिदिनं सायंकाले किमपि नेदीयः रमणीयं स्थानं भ्रमणार्थं गच्छामि। मुम्बापुरीस्थाः सर्वाः चिन्ता मया बुध्या एव दूरीकृताः। तेन इदानीम् अहं सविशेषं सुस्थोऽस्मि।

यदि पुनः अधिकानि पञ्चदशदिनानि अत्र निवत्स्यामि, तर्हि सर्वशः निरामयो बलवान् अपि भविष्यामि इति मे भाति। अतः मे अवकाशविस्तारार्थं कृपया प्रमाणपत्रं प्रेषयित्वा अनुगृह्णन्तु मां भवन्तः। तथा पुष्टिकरम् औषधम् अपि सूचयन्तु भवन्तः पत्रद्वारा। इदानीम् औषधस्य समयः संजातः। अतः अलमिति।

भवदीयः

............

---

## २–६ सखीं प्रति पत्रम्।

पुण्यपत्तनतः
दि० ................

प्रियसखि माधवि,

सस्नेहं नमस्ते।

गतसप्ताहे एव तव स्नेहपूर्णं पत्रं प्राप्य नितरां प्रसन्नाऽस्मि। अनेकवारं तस्य उत्तरं लिखितुम् ऐच्छम्। किन्तु बहुकार्यव्यापृततया अवसरः एव मया न लब्धः। त्वं जानासि एव यत् भगिन्याः शकुन्तलायाः विवाहार्थं वयम् अत्र संप्राप्ताः। अस्माकं बहवः आप्ताः सम्बन्धिनश्च समागताः अत्र। अतः तेषां स्वागतं, तैः सार्धं प्रतिदिनं विविधस्थानगमनं, विवाहार्थम् अनेकवस्तूनां क्रयणम् च इत्यादिभिः यत्सत्यं कालः वेगेन धावति एव इति अहं मन्ये।

अन्यत् सर्वं कुशलम् अस्ति। तत्रापि सर्वं कुशलं भवेत् इति अहम् आशासे। तव मातृपितृभ्याम् नमः।

भवत्स्नेहाकांक्षिणी
रागिणी।

---

## २–७ कन्यां प्रति मातुः पत्रम्।

रत्नागिरीतः
दि० ................

स्वस्ति,

प्रियवत्से रोहिणि,

शतं शुभानि भूयासुः।

गृहात् मुम्बापुर्यां विद्यालयं गतायाः तव पंचदशदिवसा निर्गताः। तत्र गमनानन्तरं केवलम् एकं पत्रं त्वया प्रेषितम्। तदनन्तरम् एकमपि पत्रं न अधिगतं तव। तेन वयं चिन्ताग्रस्ताः। विशेषतः त्वदीयः पिता भृशम् उदास्ते। जानासि एव तस्य त्वयि अत्युत्कटं प्रेम। तत्र छात्रावासे सम्यक् स्थानलाभः जातः न वा तदपि न ज्ञायते।

कदा भविष्यति ते षाण्मासिकी परीक्षा ? तदनन्तरं मासावधिः दीर्घावकाशः भवेत् नु ? परीक्षार्थं प्रथमतः एव सावधानचेतसा अध्ययनं कर्तव्यम् । कदापि वृथा कालक्षेपणं न कर्तव्यम् । तथैव प्रजागरणम् अपि न श्रेयस्करम् । विशेषतया परीक्षाकाले किंचिदपि निशि जागरणं मा कुरु ।

त्वरितं पत्रलेखनेन कुशलं ज्ञापय । इहगतं तु सर्वं कुशलमेव । शुभमिति ।

त्वदीया
शुभाकांक्षिणी
माता

---

## २–८ कन्यायाः पत्रं पितरं प्रति ।

मुम्बापुरीतः
दि०.....................

स्वस्ति ।

माननीयस्य पितृवर्यस्य चरणारविन्दयोः सादरं प्रणामाः । अधिगतं मय भावत्कं पत्रम् । ज्ञातं च निखिलं वृत्तम् । तेन अतीव प्रसन्ना अहम् ।

अहम् अत्र कुशलिनी । गतसप्ताहे एव अस्माकं महाविद्यालयस्य स्नेहसंमेलनं सम्पन्नमभवत् । तस्मिन् बहवः मनोरंजनात्मकाः कार्यक्रमाः संजाताः । मयाऽपि तत्र एकस्मिन् नाट्यप्रवेशे नायिकायाः भूमिका कृता आसीत् । तदर्थं मया त्रीणि पारितोषिकाणि प्राप्तानि । तथापि इतः परम् अस्मिन् वर्षे एतादृशेषु कार्यक्रमेषु न सहभागिनी भवेयम् इति मया निश्चितमस्ति । यतः इदानीं वार्षिकी परीक्षा केवलं मासावधि समागता । तस्यामपि प्रथमश्रेणी उपलभ्या एव । अतः इतः परं अध्ययनकर्मण्येव सुतरां व्यापृता भविष्यामि । कदाचित् पत्रमपि नियतसमये प्रेषयितुं न शक्ष्यामि । तथापि मा चिन्तां कुरुत । समाप्तायां तु परीक्षायां गृहं प्रत्यागन्तुम् अहम् अत्युत्सुका अस्मि ।

माननीयायाः मातुः चरणयोः सादरं प्रणतिः । गृहे गुरुजनेभ्यो नमः । स्वस्ति कनिष्ठेभ्यः सोदरेभ्यः । अन्यत् सर्वं कुशलम् ।

भवदीया स्नेहदुर्ललिता
................

---

## २–९ भ्रातरं प्रति ज्यायस्याः भगिन्याः पत्रम्।

माधवनगरतः

———

स्वस्ति ते

प्रियवत्स माधव,

सप्रेम शुभाशीर्वादः च।

तव पत्रम् प्राप्तम्। अवगतः अर्थश्च। त्वं नवमकक्षायां प्रथमश्रेण्यां प्रथमक्रमाङ्केण उत्तीर्णः इति ज्ञात्वा अतीव संतोषः जातः। हार्दिकमभिनन्दनमस्तु भवतः। तदर्थं पारितोषिकरूपेण रूप्यकशतं मया प्रेषितम् अस्ति। तस्य यथोचितं विनियोगं कर्तुमर्हसि।

इदानीं त्वं दशमकक्षायां प्रविष्टोऽसि। एतत् वर्षं महत्त्वपूर्णमस्ति शैक्षणिकजीवने। अतः एवमेव निरलसो भूत्वा गाढाध्ययनं कृत्वा यशस्वी भव। स्वकुलस्य तथा स्वविद्यालयस्य अपि नाम उज्ज्वलं कुरु। अस्माकं शुभाशिषः च तव कृते नित्यं भवन्त्येव। एवं तावदवधेयम्। अध्ययनकर्मणि अतिव्यापृतोऽपि सन् पत्रद्वारा स्वकुशलं निवेदयितुं मा विस्मर। अत्र सर्वे कुशलिनः। शुभमिति।

त्वदीया हितैषिणी

.....................

———

# ३ संस्कृतपाठावगमः।

### ३–१

**सुसंगता**—एतत्तत्कदलीगृहम्। तत्प्रविशामि। एषा मे प्रियसखी सागरिका। किं पुनरेषा गुर्वनुरागोत्क्षिप्तहृदया किमप्यालिखन्ती मामपि न प्रेक्षते। भवतु। तद्यावदस्या दृष्टिपथं परिहृत्य निरूपयिष्यामि किमेषा लिखतीति। कथमेतया भर्ताऽऽलिखितः। साधु सागरिके साधु। अथवा न कमलाकरमुज्झित्वा राजहंस्यन्यस्मिन्नभिरमते।

**सागरिका**—आलिखितो मयैषः। किं पुनरनवरतनिपतद्बाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति। कथं प्रियसखी सुसंगता। सखि इहोपविश।

**सुसंगता**—सखि क एष त्वयात्र चित्रफलके आलिखितः।

**सागरिका**—प्रवृत्तमदनमहोत्सवे भगवाननङ्गः।

**सुसंगता**—अहो ते निपुणता। किं पुनः शून्यमिव चित्रं प्रतिभाति। तदहमप्यालेख्य रतिसनाथं करिष्ये।

(वर्णिकां गृहीत्वा नाटयेन रतिव्यपदेशेन सागरिकामालिखति।)

**सागरिका**—सुसंगते कुतस्त्वयात्राहमालिखिता।

**सुसंगता**—सखि किमकारणं कुप्यसि। यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता। तदन्यथासम्भाविनि, किं तवैतेनालपितेन। कथय सर्ववृत्तान्तम्।

## अवगमार्थं प्रश्नोत्तराणि।

प्रश्नः—कुत्र भवति एतत् संभाषणम्?

उत्तरम्—कदलीगृहे भवति एतत् संभाषणम्।

प्रश्नः—सागरिकया कस्य चित्रमालिखितम्।

उत्तरम्—सागरिकया भर्तुः (महाराजस्य) चित्रमालिखितम्।

प्रश्नः—सागरिका तच्चित्रं प्रेक्षितुं किमर्थं न प्रभवति?

उत्तरम्—सागरिकायाः दृष्टिः अनवरतनिपतद्बाष्पसलिलेन द्रष्टुमसमर्था आसीत्।

प्रश्नः—सुसंगता रतिव्यपदेशेन कस्य चित्रमालिखति?

उत्तरम्—सुसंगता रतिव्यपदेशेन सागरिकायाः चित्रमालिखति।

---

### ३–२

"अहिंसा परमो धर्म." इति सम्यगुक्तं मनीषिभिः। वैयक्तिकशान्तये सामाजिकोन्नतये च अहिंसाया महत्त्वं बहु वर्तते। अहिंसाया द्विविधं स्वरूपं भवति स्थूलं सूक्ष्मं चेति। स्थूलरूपेण 'कस्यापि शरीरपीडा न क्रियेत' इति सिद्धं भवति, सूक्ष्मरूपेण च 'मनसा, वाचा, कर्मणा वा कस्यापि मनुष्यस्य हानिं न कुर्यात्' एष निश्चयो भवति। अहिंसायाः प्रतिष्ठापनं पुराणानां प्रधानमुद्देश्यमस्ति।

ये पशुपक्षिणां मांसानि खादन्ति, तेषां निवारणार्थमिदमेव कथनं पर्याप्तं यत् ते जीवा अपि तादृशा ईश्वरस्य पुत्राः यादृशा वयम्। तेषां हानिं ये कुर्वन्ति ते ईश्वरस्य अप्रिया भवन्ति।

हिंसायाः प्रतीकारः सत्याग्रहविधिना कर्तव्यः। यदि स न सम्भवेत्, तर्हि हिंसायाः प्रतीकारः हिंसयैव कर्तव्यः। शठे शाठ्यमपि समाचरेत्।

## प्रश्नोत्तराणि।

प्रश्नः—किमर्थम् अहिंसाया महत्त्वं बहु वर्तते।

उत्तरम्—वैयक्तिशान्तये सामाजिकोन्नतये च अहिंसाया महत्त्वं बहु वर्तते।

प्रश्नः—अहिंसायाः स्थूलं स्वरूपं किं भवति?

उत्तरम्—'कस्यापि शरीरपीडा न क्रियेत' इति एतत् अहिंसायाः स्थूलं स्वरूपं भवति।

प्रश्नः—पुराणानां प्रधानमुद्देश्यं किमस्ति?

उत्तरम्—अहिंसायाः प्रतिष्ठापनं पुराणानाम् उद्देश्यमस्ति।

प्रश्नः—पशुमांसभक्षकाणां निवारणार्थं किं कथनं पर्याप्तम्?

उत्तरम्—'ते जीवा अपि तादृशा ईश्वरस्य पुत्राः यादृशा वयम्। तेषां हानिं ये कुर्वन्ति ते ईश्वरस्य अप्रिया भवन्ति' इदमेव कथनं पर्याप्तम्।

प्रश्नः—हिंसायाः प्रतीकारः कथं (केन विधिना, केन प्रकारेण) कर्तव्यः?

उत्तरम्—हिंसायाः प्रतीकारः सत्याग्रहविधिना कर्तव्यः। यदि स न सम्भवेत्, तर्हि हिंसायाः प्रतीकारः हिंसयैव कर्तव्यः।

---

## ३–२

(रामायणम्–अयोध्याकाण्डम्–सप्तमः सर्गः।)

विदीर्यमाणा हर्षेण धात्री परमया मुदा।
आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम्॥

श्वः पुष्येण जितक्रोधं यौवराज्येन राघवम्।
राजा दशरथो राममभिषेचयितानघम्॥

धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता।
कैलासशिखराकारात् प्रासादादवरोहत॥

२

सा दह्यमाना कोपेन मन्थरा पापदर्शिनी ।
शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥
मन्थराया वचः श्रुत्वा शयनात् सा शुभानना ।
उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शारदी ॥
अतीव सा तु संहृष्टा कैकेयी विस्मयान्विता ।
एकमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥
दत्त्वा त्वाभरणं अस्यै कुब्जायै प्रमदोत्तमा ।
कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥
रामे वा भरते वाहं विशेषं नोपलक्षये ।
तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥

**अवगमार्थे प्रश्नोत्तराणि ।**

प्रश्नः (१) धात्र्याः अवस्था कीदृशी आसीत् ?
उत्तरम् — धात्री हर्षेण विदीर्यमाणा आसीत् ।
प्रश्नः (२) धात्री रामस्य अभिषेकवृत्तं कस्यै आचचक्षे ?
उत्तरम् — धात्री रामस्य अभिषेकवृत्तं कुब्जायै आचचक्षे ।
प्रश्नः (३) कुब्जा किमर्थम् अमर्षिता जाता ?
उत्तरम् — धात्र्याः वचनं श्रुत्वा कुब्जा अमर्षिता जाता ।
प्रश्नः (४) प्रासादः कीदृशः आसीत् ?
उत्तरम् — प्रासादः कैलासशिखराकारः आसीत् ।
प्रश्नः (५) संहृष्टा कैकेयी कुब्जायै किम् ददौ ?
उत्तरम् — संहृष्टा कैकेयी कुब्जायै एकम् आभरणम् ददौ ।
प्रश्नः (६) कैकेयी किमर्थं तुष्टा आसीत् ?
उत्तरम् — राजा रामं राज्येऽभिषेक्ष्यति इति कैकेयी तुष्टा आसीत् ।

---

## ३–४

(महाभारतम्, विराटपर्व, अध्याय ३७)

तमब्रवीद्राजपुत्री समुपेत्य नरर्षभम् ।
प्रणयं भावयन्ती सा सखीमध्य इदं वचः ॥

गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नले ।
ता विजेतुं मम भ्राता प्रयास्यति धनुर्धरः ॥
नाचिरं निहतस्तस्य संग्रामे रथसारथिः ।
तेन नास्ति समः सूतो योऽस्य सारथ्यमाचरेत् ॥
तस्मै प्रयतमानाय सारथ्यर्थं बृहन्नले ।
आचचक्षे हयज्ञाने सैरन्ध्री कौशलं तव ॥
अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा ।
त्वयाऽजयत्सहायेन पृथिवीं पाण्डवर्षभः ॥
सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नले ।
पुरा दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः ॥
अथैतद्वचनं मेऽद्य नियुक्ता न करिष्यसि ।
प्रणयादुच्यमाना त्वं परित्यक्ष्यामि जीवितम् ।

## अवगमार्थे प्रश्नोत्तराणि ।

प्रश्नः (१) बृहन्नलाम् उद्दिश्य कस्य इदं वचः?
उत्तरम् — बृहन्नलाम् उद्दिश्य राजपुत्र्याः इदं वचः ।
प्रश्नः (२) गावः कैः काल्यन्ते स्म?
उत्तरम् — गावः कुरुभिः काल्यन्ते स्म ।
प्रश्नः (३) तस्याः भ्राता कुत्र प्रयास्यति ।
उत्तरम् — तस्याः भ्राता गाः विजेतुं प्रयास्यति ।
प्रश्नः (४) तस्य रथसारथेः किम् अभवत्?
उत्तरम् — अचिरं तस्य रथसारथिः संग्रामे निहतः ।
प्रश्नः (५) बृहन्नलायाः हयज्ञाने कौशलम् कः आचचक्षे ।
उत्तरम् — बृहन्नलायाः हयज्ञाने कौशलम् सैरन्ध्री आचचक्षे ।
प्रश्नः (६) बृहन्नला कस्य दयितः सारथिः आसीत् किल?
उत्तरम् — बृहन्नला अर्जुनस्य दयितः सारथिः आसीत् किल ।
प्रश्नः (७) राजपुत्री बृहन्नलां किं विज्ञापयति?
उत्तरम् — बृहन्नले, त्वं मम भ्रातुः सारथ्यं कुरु ।
प्रश्नः (८) बृहन्नला राजपुत्र्याः वचनं न करिष्यति चेत्?
उत्तरम् — तर्हि राजपुत्री जीवितं परित्यक्ष्यति ।

---

# ४ कथासूत्रानुसारेण कथालेखनम् ।

## ४-१ कथासूत्रम् ।

लेखनेऽनभिज्ञः पत्रलेखने साहाय्यं याचते । –पर्यटनखिन्नोऽहं न साह्यं दास्यामि इति उत्तरम् ।—कुत्र अत्र पर्यटनसंभवः ? —पत्रं मयैव वाचनीयं भवति । अन्यस्तत्र न क्षमः इति ।

### कथा

कश्चिद् ग्रामवासी जनः न लेखने क्षमः । अतः स निजप्रतिवेशिनं प्रार्थयामास । भो सुहृद्, एकम् अनुग्रहं कुरु इति । स प्रतिवदति । वयस्य, बहुप्रवासपरिश्रान्तोऽहम् । न अधुना पदमपि गन्तुं समर्थः । अतः न भवत्प्रार्थनामङ्गीकर्तुमुत्सहे इति । कुत्र गतः आसीद् भवान् इति पृष्टश्च सः अब्रवीत् । चतुर्योजनदूरं कृष्णपुरं गतः इति । किमर्थम् इति पृच्छति ग्रामिकः । मल्लिखितं पत्रं प्रदातुमिति प्रत्युद्गिरति सुहृद् । ग्रामिको वदति । नाहं भवन्तं प्रवसनमङ्गीकर्तुं कथयिष्यामि । अहं लेखनानभिज्ञः । अतो मम पुत्राय पत्रं लेखनीयं, तत्करोतु भवान् । बहु उपकृतो भविष्यामि इति । कुत्र वसति तव पुत्र इति सुहृदा पृष्टः सोऽवदत् । पञ्चयोजनदूरे रामग्रामे इति । तर्हि पञ्चयोजनानि मया गन्तव्यानि प्रत्यागन्तव्यानि च इति आपत्स्येत इति वदति सुहृद् । कथमिदम् इति विस्मयाविष्टः पृच्छां करोति ग्रामिकः । तदा सुहृद् प्रतिवदति । मया लिखितं पत्रं पठितुं न अन्यः कोऽपि समर्थः । अतः तत्र मया एव गन्तव्यं भवति पत्रवाचनार्थे । अतः प्रसीद क्षमस्व च मां मेऽसमर्थताकृते इति ।

---

## ४-२ कथासूत्रम् ।

नाविकस्य पूर्वजाः समुद्रे एव मृता इति श्रुत्वा पण्डितः तं निर्भर्त्सयते नाविकवृत्तिकम् । नाविकोऽपि पण्डितपूर्वजाः शयने मृता इति तं शयनात् न कथं भयं ते इति पृच्छति ।

### कथा

एकदा कश्चन पण्डितः कस्यांचित् नौकायां प्रवासवशात् स्थितः नौकर्णधारं पृच्छति स्म। भोः कर्णधार, कुत्र ते पिता मृतः इति। समुद्रे एव पण्डित, इति। क्व पितामहश्च इति पृष्टो नाविको वदति। सर्वेऽपि पूर्वजाः समुद्रे एव पञ्चत्वं गता इति। तदा विहस्य पण्डितो नाविकमुपदिशति। भोः कर्णधार! यदि सर्वे पूर्वजाः समुद्रे अम्रियन्त तर्हि भवता नौचालनं प्रहेयमेव। यतः भवानपि समुद्रे एव देहनाशं प्राप्स्यति इति। तदा नाविकः प्रतिभाषते। भोः विद्वत्पण्डित, कुत्र खलु भवतो जनकपादाः इति। स्वर्गताः इति। कुत्र शयानाः स्वर्गता ननु इति। स्वशयने एव इति। कथं तर्हि पितामहगतिः इति। तेऽपि स्वशयने दिवंगता इति। सर्वे च अस्मत्पूर्वजाः एवमेव संस्थिता इति। ततः नाविकः सस्मितं वदति। तर्हि भवन्तः न शयने स्वपन्ति इति मे भाति इति। शयने एव स्वपिमि इति वदति पण्डिते तर्हि किं मया एव नाविकत्वं त्याज्यम् इति पृच्छति नाविकः।

### ४–३ कथासूत्रम्।

अर्भक–क्रन्दन अरुचिः कश्चित् क्रन्दन्तं शिशुं मार्गे वर्जयति। तस्यैव सौन्दर्यं दृष्ट्वा पश्चात् सेवकं पृच्छति। स्वीयः सुतः एव स शिशुः इति विस्मयते।

### कथा।

नारायणः बालकक्रन्दनं सोढुं न कदापि समर्थः आसीत्। यदि क्रन्दन्तं बालकं पश्यति तदा तस्मात् स्थानात् झटिति अन्यत्र प्रयाति एव।

एकदा मार्गे कांचित् ललनामपश्यत्। तस्या हस्ते धृतः आसीदेकः बालकः। बालकः तु रोदिति स्वादुमोदकार्थे। तस्य आरावं श्रुत्वा एव नारायणः ततः निसृतः अन्यत्र च आपणं गतः। कालान्तरेण स एव बालकः तया एव नार्या सह तेन पुनः मार्गे दृष्टः। बालकस्य हस्ते अर्धभुक्तः मोदकः आसीत् स च प्रहसन् धावति एव।

तस्य मुग्धसौन्दर्येण आकृष्टः नारायणः तस्य बालकस्य नामादि ललनामपृच्छत्। तदा तेन ज्ञातं स स्वस्यैव सुतः इति। गृहे स क्रन्देदिति शङ्कया न तेन कदापि स समीपमानीतः गृहीतो वा। निजं सुतं मोहनं दृष्ट्वा स विस्मयाकुलः संजातः। तथैव निजं सुतं न प्रत्यभिजानामि इति विज्ञाय व्रीडाविह्वलः अभूत्।

## ४-४ कथासूत्रम् ।

कालात्ययेन सुहृदौ मिलितौ । एकः पीनः अपरश्च कृशः । एकेन न किंचित् भुक्तं यतः द्वितीयेन सर्वमेव सदा समापितं ननु ।

---

## कथा ।

रामश्च कृष्णश्च द्वौ परमसुहृदौ आस्ताम् । कार्यवशात् भिन्नं स्थानं निवासेन अलंकृतं ताभ्याम् । बहुवर्षानन्तरं केनचित् कारणेन उभौ एकस्मिन्नेव नगरे यात्राप्रसंगेन देवालये परस्परं दृष्टवन्तौ ।

प्रथमतः न प्रत्यभिज्ञा अपि आसीत् उभयोः । संभाषणानन्तरं ज्ञातमभवत् पूर्वसुहृत्त्वम् । रामस्तु बहुपीनः जातः कृष्णस्तु कृशतनुः । तदा रामेण उक्तं, रे कृष्ण, ननु न त्वया किंचिद् भुक्तमपि एतदवधि यद् ईदृशः कृशः संजातः ? किंनिमित्तमिदमिति । तदा कृष्णेन गभीरया मुद्रया प्रत्युक्तं 'किं कथयामि रे राम । यत्र यत्र किंचिदशितव्यं मया लब्धुं प्रयतितं तत्र तत्र मत्पूर्वं भवता एव सर्वं सर्वदा भक्षितम् । अतः एव अहं कृशः इति ।

तत् श्रुत्वा उभौ अपि विहसन्तौ निर्गतौ ।

---

## परिशिष्टम् – कथासूत्राणि कथालेखनार्थे ।

यत्र बका न्यवसन् तस्य वृक्षस्य अधः तेषां बालापत्यानि खादन् सर्पः न्यवसत् । अतः तैः सर्पविवरात् नकुलविवरपर्यन्तं मृतमत्स्याः क्षिप्ताः । नकुलेन सर्पः बकशावकाश्च भक्षिताः ।

२

परिश्रान्तपथिकं सुप्तं दृष्ट्वा तस्य मुखं हंसेन पक्षच्छायया सूर्यतापात् रक्ष्यते । तस्य विवृतमुखे दौर्जन्येन काकः पुरीषमुत्ससर्ज । पान्थेन हंसः धनुष्काण्डेन व्यापादितः ।

४

कौचित् वयस्यौ देशान्तरं गतौ । एकाटव्यां भल्लूकं दृष्ट्वा एकः वृक्ष-

मारोहत्। अन्यः भूमौ अचेतनः पतितः। ऋक्षः यथागतं निवृत्तः। किमवदत् भल्लूकः इति पृष्टः शयानः अवदत्। न शठेषु विश्वासः कार्यः इति।

५

शुष्के सति सरसि मण्डूका अन्यत्र जलवतीं वापीं गन्तुम् उद्यताः। प्राज्ञः प्राह शुष्कायां वाप्यां कथं निर्गमः इति।

५

मृगयायां समविभागं ग्रहीतुमनसः गर्दभः सिंहः जंबूकश्च वनं गताः। मारितो हरिणो गर्दभेन समं विभक्तः। क्रुद्धेन सिंहेन स हतः। जंबूकेन द्विधा विभक्तः यत्र स्वकृते स्वल्पमेव रक्षितम्। कुत इदं इति पृष्टः मृतेन गर्दभेन शिक्षित इति अवदत्।

६

हिमवति दिने धनिकः दरिद्रं स्वल्पवसनं दृष्ट्वा पृच्छति। तदा यथा तव मुखं शीतेऽपि विवसनं तदेव मम देहः अभ्यस्त इति वदति दरिद्रः।

---

# ५ सारांश-लेखनम्।

## ५-१ मत्स्यपुराणम्।

**देवयानी उवाच।**

ऋषेः अङ्गिरसः पौत्रो वृत्तेनाभिजनेन च।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥ २ ॥
ऋषिर्यथाऽङ्गिरा मान्यः पितुर्मम महायशाः।
तथा मान्यश्च पूज्यश्च मम भूयो बृहस्पतिः ॥ ३ ॥
एवं ज्ञात्वा विजानीहि यद् ब्रवीमि तपोधन।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥ ४ ॥

स समापितविद्यो मां भक्तां न त्यक्तुमर्हसि ।
गृहाण पाणिं विधिवत् मम मन्त्रपुरस्कृतम् ॥ ५ ॥

कच उवाच ।

पूज्यो मान्यश्च भगवान् यथा मम पिता तव ।
तथा त्वमनवद्याङ्गि पूजनीयतमा मता ॥ ६ ॥
आत्मप्राणैः प्रियतमा भार्गवस्य महात्मनः ।
त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ॥ ७ ॥
यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव ।
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ॥ ८ ॥

देवयानी उवाच ।

गुरुपुत्रस्य पुत्रो मे न तु त्वमसि मे पिता ।
तस्मान्मान्यश्च पूज्यश्च ममापि त्वं द्विजोत्तम ॥ ९ ॥
असुरैर्हन्यमाने तु कचे त्वयि पुनः पुनः ।
तदाप्रभृति या प्रीतिस्तां त्वमेव स्मरस्व मे ॥ १० ॥
सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ॥ ११ ॥

कच उवाच ।

अनियोज्ये नियोगे मां नियुनक्षि शुभव्रते ।
प्रसीद सुभ्रूर्मह्यं त्वं गुरोर्गुरुतरा शुभे ॥ १२ ॥
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ॥ १३ ॥
भगिनी धर्मतो मे त्वं मैवं वोचः शुभानने ।
सुखेनाध्युषितो भद्रे न मन्युर्विद्यते मम ॥ १४ ॥
आपृच्छे त्वां गमिष्यामि शिवमस्त्वथ मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे ।
अप्रमत्तोद्यता नित्यं आराधय गुरुं मम ॥ १६ ॥

**सारांशः**—(यदा कचः स्वगृहं निवर्तितुं प्रवृत्तः) तदा देवयानी निजपाणिग्रहणं तम् अयाचत। कचः तु अवदत् त्वं गुरुवत् पूज्या गुरुपुत्री। अतः न इयं याचना कार्या इति। देवयान्या स पुनः प्रार्थितः आवेदयन्त्या स्वप्रीतिम्। असुरैर्हन्यमाने तस्मिन् तया या प्रीतिः प्रदर्शिता तस्याः स्मरणमपि सा दत्तवती। तथापि न कचेन तद्वचः मानितम्। उभाभ्यामपि आवाभ्यां शुक्राचार्यस्य कुक्षौ अध्युषितम्। अतः त्वं मे भगिनी एव। आमन्त्र्य अहं गच्छामि। कथान्तरे स्मर्तव्योऽहम् इति उक्त्वा स गतः। गुरु-आराधना च तेन तस्यै उपदिष्टा।

---

## ५–२ वायुपुराणम्।

**सूत उवाच।**

योऽसौ चतुर्दिशं पुच्छे शैशुमारे व्यवस्थितः।
उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो दिवि॥ ६॥
स हि भ्रमन् भ्रामयते चन्द्रादित्यौ ग्रहैः सह।
भ्रमन्तमनुगच्छन्ति नक्षत्राणि च चक्रवत्॥ ७॥
ध्रुवस्य मनसा चासौ सर्पते भगणः स्वयम्।
सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह॥ ८॥
वातानीकमयैर्बन्धैः ध्रुवे बद्धानि तानि वै।
तेषां योगश्च भेदाश्च कालाचारस्तथैव च॥ ९॥
अस्तोदयौ तथोत्पाता अयने दक्षिणोत्तरे।
विषुवद्ग्रहवर्णाश्च ध्रुवात्सर्वं प्रवर्तते॥ १०॥
ध्रुवेणाधिकृतांश्चैव सूर्योऽपावृत्य तिष्ठति।
तदेष दीप्तकिरणः स कालाग्निर्दिवाकरः॥ १२॥
परिवर्तक्रमाद्विप्रा भाभिरालोकयन् दिशः।
सूर्यः किरणजालेन वायुयुक्तेन सर्वशः।
जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तमाः॥ १३॥
आदित्यपीतं सूर्याग्नेः सोमं संक्रमते जलम्।
नाडीभिर्वायुयुक्ताभिः लोकाधानं प्रवर्तते॥ १४॥

यत्सोमात् स्रवते सूर्यः तदभ्रेषु अवतिष्ठते।
मेघा वायुनिघातेन विसृजन्ति जलं भुवि ॥ १५ ॥
एवमुत्क्षिप्यते चैव पतते च पुनर्जलम्।
न नाश उदकस्यास्ति तदेव परिवर्तते ॥ १६ ॥

**सारांशः**—अयं नभसि प्रतिष्ठितः ध्रुवः सर्वविश्वचक्रं भ्रामयति। सूर्यश्चन्द्रमाः ताराः ग्रहाः नक्षत्राणि सर्वाणि च तद्भ्रमणम् अनुगच्छन्ति। अयने अपि तस्मात् प्रवर्तेते। सूर्यः किरणैः जगतः जलम् आदत्ते। तज्जलम् अभ्रेषु तिष्ठति। मेघास्तत् भुवि विसृजन्ति। अतः तदेव जलं उत्क्षिप्यते तदेव च पुनरधः पतति पर्जन्यरूपेण। न तस्य नाशः भवति अपि तु परिवर्तनमेव।

---

## ५–२ ब्रह्मसूत्रशाङ्करभाष्यम्।

देहादिव्यतिरिक्तस्य आत्मनः आत्मीये देहादौ अभिमानो गौणः न मिथ्या, इति चेत्, न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषः अन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाक् मुख्यः अन्यः प्रसिद्धः, ततश्च अन्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः, न अप्रसिद्धवस्तुभेदस्य। तस्य तु अन्यत्र, अन्यशब्दप्रत्ययौ भ्रान्तिनिमित्तौ एव भवतः, न गौणौ। यथा मन्दान्धकारे स्थाणुरयं इति अगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ यथा वा शुक्तिकायां अकस्मात् रजतमिति निश्चितौ शब्दप्रत्ययौ तद्वद् देहादिसंघातेऽहमिति निरुपचारेण शब्दप्रत्ययौ आत्मानात्म–अविवेकेन उत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्। आत्मानात्मविवेकिनामपि पण्डितानां अजाविपालानामिव अविविक्तौ शब्दप्रत्ययौ भवतः। तस्माद् देहादिव्यतिरिक्त-आत्मास्तित्ववादिनां देहादौ अहंप्रत्ययः मिथ्या एव, न गौणः।

**सारांशः**—देहादौ अहं प्रत्ययः कस्यापि मिथ्या एव मन्तव्यः। न तु गौणार्थेन अपि सत्यः। मुख्यार्थः गौणार्थः इति द्वे भिन्ने वस्तुनी भवतः। संदर्भेण कः अर्थः कुत्र योग्यः तदवगम्यते। अत्र तु अहंप्रत्ययस्य द्वयोः अर्थयोः नावकाशः एव मुख्यगौणभेदेन। देहे स मिथ्या, आत्मनि एव सत्यः। मिथ्यासत्यादयोः मुख्यगौणत्वे नैव।

---

## ५–४ कौटिलीयमर्थशास्त्रम्।

मन्त्रपूर्वाः समारंभाः तस्माद् रक्षेत् मन्त्रम्। 'मन्त्रभेदो हि अयोगक्षेमकरो राज्ञः तदायुक्तपुरुषाणां च। तस्माद् गुह्यमेको मन्त्रयेत' इति भारद्वाजः। 'मन्त्रिणामपि हि मन्त्रिणो भवन्ति, तेषामपि अन्ये। सा एषा मन्त्रिपरंपरा मन्त्रं भिनत्ति। "नैकस्य मन्त्रसिद्धिरस्ति" इति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। अनुपलब्धस्य ज्ञानं, उपलब्धस्य निश्चितबलाधानं, अर्थद्वैधस्य संशयच्छेदनं, एकदेशदृष्टस्य शेषोपलब्धिः इति मन्त्रिसाध्यमेतत्। तस्माद् बुद्धिवृद्धैः सार्धं अध्यासीत मन्त्रम्। 'एतन्मन्त्रज्ञानम्, नैतन् मन्त्ररक्षणम्' इति पाराशराः। यदस्य कार्यं अभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्। ते यथा ब्रूयुस्तत्कुर्यात्। एवं मन्त्रोपलब्धिः संवृतिश्च भवति। नेति पिशुनः। मन्त्रिणो हि व्यवहितं अर्थं वृत्तं अवृत्तं वा पृष्टा अनादरेण ब्रुवन्ति प्रकाशयन्ति वा। स दोषः। तस्मात्कर्मसु ये येषु अभिप्रेतास्तैः सह मन्त्रयेत। तैर्मन्त्रयमाणो हि मन्त्रसिद्धिं गुप्तिं च लभते। नेति कौटिल्यः। अनवस्था हि एषा। मन्त्रिभिः त्रिभिः चतुर्भिः वा सह मन्त्रयेत। देशकालकार्यवशेन तु एकेन सह द्वाभ्यां, एको वा यथासामर्थ्यं मन्त्रयेत।

**सारांशः**—राजा कार्यार्थं केन सह मन्त्रयेत अस्य विषयस्य चर्चा अत्र कृता। उद्दिष्टं सर्वसंबन्धिनः अर्थाः ज्ञातव्याः मन्त्रः च गुप्तः स्यात् न स्फुटितः। तत्र विशालाक्षः, पाराशराः, पिशुनः च भिन्नं भिन्नं मार्गं प्रदर्शयन्ति। कौटिल्यः तु निर्दिशति त्रिभिः चतुर्भिः वा संबद्धैः मन्त्रयेत। यदि वा अवश्यं तद् एकोऽपि मन्त्रणे समर्थः विषयविशेषे इति।

## ५–५ बृहदारण्यकोपनिषत्।

जनको ह वैदेहो बहुदक्षिणेन यज्ञेन ईजे। तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुः। तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव। कःस्विद् एषां ब्राह्मणानां अनूचानतमः इति। स ह गवां सहस्रं अवरुरोध। दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभुवुः ॥ १ ॥

तान्ह उवाच। ब्राह्मणा भगवन्तः, यो वो ब्रह्मिष्ठः स एता गा उदजतामिति। ते ह ब्राह्मणा न दधृषुः। अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच। एताः सोम्य, उदज सामश्रवा इति। ता ह उदाचकार। ते ह ब्राह्मणाश्चुक्रुधुः। कथं नो

ब्रह्मिष्ठो ब्रुवीत इति । अथ ह जनकस्य वैदेहस्य होता अश्वलो बभूव । स ह एनं पप्रच्छ । त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसीति । स ह उवाच । नमो वयं ब्रह्मिष्ठाय कुर्मः । गोकामा एव वयं स्मः इति । तं ह तत एव प्रष्टुं दध्रे होता अश्वलः ॥ २ ॥

**सारांशः**—एकदा सर्वश्रेष्ठं ज्ञातारं ब्राह्मणं मार्गयितुकामः जनकः विदेहराजः ईदृशाय गवां सहस्रं दास्यामि इति उद्घोषितवान् । दश मुद्राः अपि प्रतिगौ बद्धाः । न कोऽपि तद् आह्वानं स्वीचकार । ततः याज्ञवल्क्यः निजशिष्यं गोहरणाय आदिशत् । ततः सर्वे क्रुद्धाः न भवान् प्राज्ञतमः इति ऊचुः तम् । तेन उक्तं गोकामः अहम् । न कोऽपि ताः गृण्हाति इति ता नयामि । ततः तं प्रश्नान् अपृच्छत् जनकस्य होता अश्वलः ।

---

# ६ कल्पनाविस्तारः ।

## ६–१ शरीरमाद्यं खलु धर्मसाधनम् ।

सर्वैः वेदान्तिभिः प्रतिपाद्यते शरीरं विनाशि आत्मा एव नित्यः अतः स एव साक्षात्करणीयः । असत्यस्य सेवनं न कर्तव्यम् । सर्वं यद्विनाशि तत् असत्यमेव । अतः मा भूत् शरीरे प्रीतिः अपि तु भवतु भक्तिः आत्मतत्त्वे इति ।

तत्र उच्यते शरीरमाद्यं खलु धर्मसाधनम् इति । महाभारते इदं सुभाषितं ग्रथितम् । यदि शरीरे नरः निस्पृहः स्यात् तत् अनादृतं शरीरं न साक्षात्काराय अलं भवेत् । यः पुण्यसंग्रहः करणीयः यच्च धर्मसाधनं कर्तव्यं तत् सर्वं शरीरद्वारा एव सिध्येत् । आत्मदर्शने यः प्रयत्नः अवश्यः सोऽपि शरीरमनोबुद्धिद्वारा एव संभाव्यः । यदि शरीरमबलं स्यात् तर्हि मनोबुध्यादिसंभारः अपि निःशक्तः स्यात् । उक्तमन्यत्र देवो दुर्बलघातकः इति । देवोऽपि सहायः स्वयमुद्यमशीलस्य । उद्यमशीलता तु निरामयशरीरस्य एव ।

व्याधिग्रस्तेन शरीरेण धर्म–अर्थ–काम–मोक्षाणां प्राप्तिः दुर्लभा, ननु अशक्यप्राया एव । शरीरमेव आत्मदेवमन्दिरम् । अतोऽपि आत्मभक्तैः स्वमन्दिरं निर्दोषं सबलं रक्षणीयं खलु ।

सुखार्थिभिरपि धर्मसाधना शरीरारोग्येन संपादनीया। अखण्डपुण्यकृत्यैर्यदि स्वर्गः उपलब्धः तथापि तस्य उपभोगे यदि इदं दुर्बलमेव शरीरं उपयुज्येत तर्हि न भोगसंतोषोऽपि स्यात्। भवतु अध्ययनं, यजनं वा श्रवणं मननं वा योगः समाधिर्वा। सर्वमिदं अनामयशरीरेण साध्यम्। शरीरम् एकमेव अस्माकं नरजातेरुपकरणं यतः संस्कृतिः प्रगतिः सौन्दर्यं च जगति प्रसार्येरन्। अतः शरीरमाद्यं खलु धर्मसाधनमिति यदुक्तं तत्समीचीनमेव।

---

## ६-२ विद्याविहीनः पशुः।

विद्या नाम ज्ञानम्। तदेव मानवं पशुतः विशेषयति। अन्ये देहधर्माः उभयसाधारणाः। उक्तमेव 'आहारनिद्राभयमैथुनादि सामान्यमेतत् पशुभिर्नराणाम्' इति। यत्तु मानवेषु असाधारणं तत् ज्ञानमेव। तत्तु अध्ययनविचाराधीनम्। अध्ययने मनुजः समर्थः, न पशवः। अध्ययनं नाम पूर्वजैः उदाहृतानामनुभूतीनां संमननम्। न च तत्र पशूनां समर्थता! तत्र विचारः विमर्शः अपि मनुजानामेव शक्यः। यदि तु एतज् ज्ञानार्जनं मानवः न कुर्यात्, यदि सः विद्यया विहीनः एव जीवेत् तर्हि तस्य जीवने पशुसाधारणा एव क्रियाः स्युः। अर्थात् विद्याविहीनः नरः पशुभ्यः न विशिष्टः। अत एव स पशुरेव गणनीयः इति भर्तृहरिणा नीतिशतके विद्याप्रशंसायां कवितम्।

---

## ६-३ मरणं मम रोचते न दारिद्र्यम्।

मरणेन नरस्य सर्वापदः विलयं यान्ति। दारिद्र्ये तु ताः सर्वाः प्रभवन्ति। जीवनं दुःसहं भवति। न अशनं न शरणं न शयनं वापि प्राप्यते। मनसापि याचकभोग्या दुरवस्था अपमानादि च सेव्यं भवति। आप्ताः न आप्तत्वं मन्यन्ते। न कुटुम्बमपि तं गणयति। लज्जितः अवमानितः समाजाद् दूरं पलायितुमारभते। एवं दारिद्र्याधिगमे सर्वा अवनतिः नरं ग्रसति। मरणे तु सर्वा संवेदना एव प्रणश्यन्ति। न किंचिद् हेयं देयं वा अवशिष्यते। सर्वपीडाविमुक्तः भवति मृतः। सर्वपीडान्वितस्तु दरिद्रः। अतः चारुदत्तमुखेन शूद्रककविना इयमुक्तिः पाठिता। न तु अद्य कोऽपि प्राकृतः तां मन्येत।

---

## ६–४ स्वभावो दुरतिक्रमः ।

परश्व एव एकस्यां कथायां पठितं मया । तत्र वर्णितः विनायकः नाम पुरुषः प्रथमं स्वभाववक्रः तथा समत्सरः आसीत् । किन्तु अनेकैः अनुभवैः तस्य स्वभावपरिवर्तनं जातम् । सः निर्मत्सरः सरलः च अभवत् । अनेकेषु चित्रपटेषु अपि अन्ते खलनायकानां खलत्वं दूरीभवति तथा ते सुजनतां गच्छन्ति इति दृश्यते अस्माभिः । किन्तु यत्सत्यं, एतत् स्वभावपरिवर्तनं केवलं कथाकाव्येषु एव शक्यं, न प्रत्यक्षव्यवहारे इति मे मतिः । यो हि यस्य स्वभावः, सः यावज्जन्म तम् अनुसरति । सः कदापि केनापि परिवर्तितुं न शक्यते इति अनुभवः ।

इतिहासोऽपि अस्मान् एतदेव न निवेदयति किम्? बिभीषणहनुमद्भिः वारंवारं उपदिष्टोऽपि सन् दशमुखः रावणः सीतालोभं न तत्याज । अतः एव रामायणं घटितम् । तथा भीष्म-द्रोण-श्रीकृष्णादिभिः भूयो भूयः उपदिश्यमानः अपि दुर्योधनः स्वाहंकारं तथा दुराग्रहं न मुमोच, अतः एव महाभारतम् संजातम् । एतेन एतदेव सिद्धं भवति, यत् स्वभावो दुरतिक्रमः इति सत्यमेव एतत् ।

---

## ६–५ योगः कर्मसु कौशलम् ।

योगशब्दस्य प्रभूताः व्याख्याः लभ्यन्ते । भगवद्गीतायां एषा पङ्क्तिः । तत्रैव अन्यदपि व्याख्यानं 'समत्वं योग उच्यते' इति प्रणीतम् । तथैव कानिचिद् दर्शनानि अपि योगशब्दभाञ्जि भवन्ति । तथापि अत्र कर्मसु कौशलं इति यद् व्याख्यातं तदपि न केवलं समीचीनं किं तु अन्यव्याख्यान–अविरुद्धमपि । कर्मसु कौशलं नात्र दैहिकं इन्द्रियजं वा अभिप्रेतम् । किं तु बुद्धेः एकाग्रता एव लक्ष्यीकृता । यदि मनसः न विषये एकाग्रत्वं, तर्हि सत्यपि ज्ञानकौशले कार्यं न समीचीनं स्यात् । यदा तु सर्वेन्द्रियशक्तिः कस्मिन्नपि कार्ये पिण्डीभूता एव वर्तते तदा मनश्चांचल्य-अभावात् कार्ये मर्वा बुद्धिः उपयोज्यते । न प्रमादावसरः शैथिल्यावकाशः वा । अतः इदं एकतन्त्रं कौशलं बुद्धिनियमनेन एव प्राप्यते अतः तदेव योग इति उच्यते । कर्मसु कौशलं तस्य दृश्यपरिणतिः ।

### कल्पनाविस्तारविषयाः ।

१. वसन्ते त्वत्र संप्राप्ते काकः काकः पिकः पिकः । २. मातापित्रोश्च शुश्रूषा शास्त्राय च सुखाय च । ३. अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ।

४. विद्याधनं सर्वधनप्रधानम् । ५. प्रासादशिखरस्थोऽपि काको न गरुडायते । ६. बालानां रोदनं बलम् । ७. नास्ति तृष्णासमो व्याधिः । ८. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः । ९. पिण्डे पिण्डे मतिर्भिन्ना । १०. योजकस्तत्र दुर्लभः । ११. मौनं सर्वार्थसाधनम् । १२. गुणाः सर्वत्र पूज्यन्ते ।

---

## ७ मातृभाषायामनुवादार्थे पाठः ।

### ७–१

मातेव रक्षति पितेव हिते नियुङ्क्ते
भार्येव चाभिरमयत्यपनीय खेदम् ।
कीर्तिं च दिक्षु विमलां वितनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥ १ ॥

किं कारणं सुकविराज मृगा यदेते
व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः ।
देव त्वदस्त्रचकिताः श्रयितुं स्वजाति-
मेके मृगाङ्कमृगमादिवराहमन्ये ॥ २ ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्य यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ३ ॥

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणीञ् शिरीषकुसुमप्रान्तेन संनह्यते ।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥ ४ ॥

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ ५ ॥

स्वार्थं धनानि धनिकात्प्रतिगृह्णतोऽपि
स्वास्यं भजेन्मलिनतां किमिदं विचित्रम् ।
गृण्हन्परार्थमपि वारिनिधेः पयोऽपि
मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ६ ॥

---

७–२

'देव, सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो भवानद्य विन्ध्यवनमध्यं निवसतीति जलबुद्बुदसमाना विराजमाना संपत्तडिल्लतेव सहसैवोदेति नश्यति च । तन्निखिलं दैवायत्तमेवावधार्य कार्यम् ।

किं च पुरा हरिश्चन्द्ररामचन्द्रमुख्या असंख्या महीन्द्रा ऐश्वर्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यमकुर्वन् । तद्वदेव भवान् भविष्यति। कंचन कालं विरचितदैवसमाधिर्गलिताधिस्तिष्ठतु तावत्' इति ।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम । तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कंचन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो राजहंसो मुनिमभाषत—'भगवन्, मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यमनुभवति । तद्वदहमप्युग्रं तपो विरच्य तमरातिमुन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भवन्तं प्राप्नुवम्' इति ।

ततस्त्रिकालज्ञस्तपोधनो राजानमवोचत् 'सखे ! शरीरकार्श्यकारिणा तपसालम् । वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं संभविष्यति । कञ्चन कालं तूष्णीमास्स्व' इति ।

---

तती रात्र्यां व्यतीतायामन्नमादाय पाण्डवः ।
भीमसेनो ययौ तत्र यत्राऽसौ पुरुषादकः ॥

आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली ।
आजुहाव ततो नाम्ना तदन्नमुपपादयन् ॥

ततः स राक्षसः क्रुद्धो भीमस्य वचनात्तदा ।
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः ॥

महाकायो महावेगो दारयन्निव मेदिनीम् ।
लोहिताक्षः करालश्च लोहितश्मश्रुमूर्धजः ॥

आकर्णाद्भिन्नवक्त्रश्च शंकुकर्णो बिभीषणः ।
त्रिशिखां भ्रुकुटीं कृत्वा संदश्य रदनच्छदम् ॥

भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ॥

कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ॥

भीमसेनस्ततः श्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ।
रवं स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः ॥

तथापि परिभूयैनं प्रेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ॥

अमर्षेण तु संपूर्णः कुन्तीपुत्रं वृकोदरम् ।
जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः ॥

तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।
नैवाऽवलोकयामास राक्षसं भुङ्क्त एव सः ॥

---

स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥

प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥

अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ।
अलंकृत इवाभाति येन संवत्सरः शुभः ॥

नीहारपरुषो लोकः पृथिवी सस्यशालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥

प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ।
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥

रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥

ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥

मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥

एते हि समुपासीना विहगा जलचारिणः ।
न विगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥

अवश्यायतमोनद्धा नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥

---

कर्णः—भोः शल्यराज, श्रूयतां ममास्त्रस्य वृत्तान्तः ।

शल्यः—ममाप्यस्ति कौतूहलमेनं वृत्तान्तं श्रोतुम् ।

कर्णः—पूर्वमेवाहं जामदग्न्यस्य सकाशं गतवानस्मि ।

शल्यः—ततस्ततः ।

कर्णः—ततः—

विद्युल्लताकपिलतुङ्गजटाकलाप-
मुद्यत्प्रभावलयिनं परशुं दधानम् ।
क्षत्रान्तकं मुनिवरं भृगुवंशकेतुं
गत्वा प्रणम्य निकटे निभृतः स्थितोऽस्मि ॥

शल्यः— ततस्ततः ।

कर्णः —ततो जामदग्निना ममाशीर्वचनं दत्वा पृष्टोऽस्मि । भो भवान् किमर्थमिहागत इति ।

शल्यः— ततस्ततः ।

कर्णः —ततः 'भगवन् ! अखिलान्यस्त्राण्युपशिक्षितुमिच्छामि' इत्युक्तवानस्मि । ततः उक्तोऽहं भगवता 'ब्राह्मणेषूपदेशं करिष्यामि न क्षत्रियाणाम्' इति ।

शल्यः—अस्ति खलु भगवतः क्षत्रियवंश्यैः पूर्ववैरम् । ततस्ततः ।

कर्णः —ततो नाहं क्षत्रिय इत्यस्त्रोपदेशं गृहीतुमारब्धं मया । कतिपयकालातिक्रमे कदाचित्फलमूलसमित्कुसुमाहरणाय गतवता गुरुणा सहानुगतोऽस्मि । ततः स गुरुर्वनभ्रमणपरिश्रमान्मदङ्के निद्रावशमुपगतः ।

शल्यः — ततस्ततः ।

कर्णः — ततः—

कृत्ते वज्रमुखेन नाम कृमिणा दैवान्ममोरुद्वये
निद्राच्छेदभयादसह्यत गुरोर्धैर्यात्तदा वेदना ।
उत्थाय क्षतजाप्लुतः स सहसा रोषानलोद्दीपितो
बुध्द्वा मां च शशाप कालविफलान्यस्त्राणि ते सन्त्विति ॥

---

७–६

यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते; यथा दण्डोद्यतकरं पुरुषम् अभिमुखम् उपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिम् उपलभ्य तं प्रति अभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीन् आक्रोशतः खड्गोद्यतकरान् बलवतः उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते, अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः। पश्वादीनां च प्रसिद्धः अविवेकपुरस्सरः प्रत्यक्षादि-व्यवहारः। तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारः तत्कालः समानः इति निश्चीयते। शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी न अविदित्वा आत्मनः परलोकसम्बधम् अधिक्रियते तथापि न वेदान्तवेद्यम् अशनायाद्यतीतम् अपेतब्रह्मक्षत्रादिभेदम् असंसारि आत्मतत्त्वम् अधिकारे अपेक्ष्यते अनुपयोगाद् अधिकारविरोधाच्च।

---

७–७

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः॥
तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः॥
तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राशिषमित्युवाच॥
जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम्॥
उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे॥
तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या॥
तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन्।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते॥

पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥
अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥

---

७–८

औदार्यं भुवनत्रयेऽपि विदितं संभूतिरम्भोनिधे—
वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः ।
एवं दातृगुरोर्गुणाः सुरतरोः सर्वेऽपि लोकोत्तराः
स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥ १ ॥

विश्वाभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव ।
लोकंपृणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुतापि नितान्तरम्या ॥ २ ॥

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः ।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ३ ॥

तोयैरल्पैरपि करुणया भीमभानौ निदाघे
मालाकार व्यरचि भवता या तरोरस्य पुष्टिः ।
सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां
धारासारानपि विकिरता विश्वतो वारिदेन ॥ ४ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना—
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया—
न्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ५ ॥

यते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसन्ततिरसौ सन्तापमालाकुला ।
एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग् वारिधीनां जनुः ॥ ६ ॥

---

७–९

एकतमस्तु जरच्छबरस्तस्मात् पुलिन्दवृन्दादनासादितहरिणपिशितः पिशिताशन इवातिविकृतदर्शनः पिशितार्थी तस्मिन्नेव तरुमूले मुहूर्तमिव व्यलम्बत। अन्तरिते च तस्मिन् शबरसेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया कपिलभ्रूलतापरिवेषभीषणया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि श्येन इव विहगमिषास्वादलालसः सुचिरमारुरुक्षुस्तं वनस्पतिमामूलादपश्यत् । उत्क्रान्तमिव तस्मिन् क्षणे तदालोकनभीतानां शुककुलानामसुभिः ।

किमिव हि दुष्करमकरुणानाम् । यतः स तमनेकतालतुङ्गमभ्रङ्कषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादपमारुह्यताननुपजातोत्पतनशक्तीन्, कांश्चिदल्पदिवसजातान् गर्भच्छविपाटलान् शाल्मलीशङ्कामुपजनयतः, कांश्चिदुद्भिद्यमानपक्षतया नलिनसंवर्तिकानुकारिणः, कांश्चिदर्कफलसदृशान्, कांश्चिल्लोहितायमानचञ्चुकोटीन् ईषद्विघटितदलपुटपाटलमुखानां कमलमुकुलानां श्रियमुद्वहतः, कांश्चिदनवरतशिरःकम्पव्याजेन निवारयत इव प्रतीकारासमर्थान्, एकैकशः फलानीव तस्य वनस्पतेः शाखासन्धिभ्यः कोटरान्तरेभ्यश्च शुकशावकानग्रहीत्, अपगतासूंश्च कृत्वा क्षितावपातयत् ।

---

७–१०

वेदोक्ते अर्थे शुष्कतर्केण प्रत्यवस्थानम् अयुक्तम् । तर्कस्य अप्रतिष्ठानात् । तर्को नाम स्वोत्प्रेक्षिता युक्तिः । सा एकोक्ता न अन्यैः अङ्गीक्रियते । स्वतन्त्राणाम् ऋषीणां मतिभेदाद् वस्तुनः द्वैरूप्यासंभवात् नियामकाभावाच्च । अतो न तर्कस्य प्रतिष्ठा । पूर्वपक्षिणः परिहारः । अपि अन्यथा अनुमेयमिति चेत् । एवमपि अन्यथा वयम् अनुमास्यामहे । यथा न अप्रतिष्ठा दोषो भविष्यति । न हि कोऽपि तर्कः प्रतिष्ठितो नास्तीति वक्तुं शक्यते । व्यवहारोच्छेदप्रसंगात ।

आर्षं धर्मोपदेशं च धर्मशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥

(म. स्मृ. १२/१०६) इति स्मृतेः ।

सावद्यतर्कपरिहारेण निरवद्यः तर्कः प्रतिपत्तव्यः भवति इति चेद्, एवमपि अविमोक्षप्रसङ्गः । ब्रह्मवादिनो निर्दुष्टतर्कसद्भावेऽपि प्रकृतिवादिनः तर्कस्य दोषाविमोक्षप्रसङ्गः । मूलनियमाभावाद् वैमत्यस्य विद्यमानत्वात् ।

---

७--११

कण्टकशोधनोक्ताश्च अपसर्पाः परेषु कृतवेतनाः वसेयुः असंपातिनः चारार्थम् ॥ ते उभयवेतनाः ॥

गृहीतपुत्रदारांश्च कुर्याद् उभयवेतनान् ।
तांश्चारिप्रहितान् विद्यात् तेषां शौचं च तद्विधैः ॥
एवं शत्रौ च मित्रे च मध्यमे चावपेत् चरान् ।
उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि ॥
अन्तर्गृहचरास्तेषां कुब्जवामनपण्डकाः ।
शिल्पवत्यः स्त्रियो मूकाः चित्राश्च म्लेच्छजातयः ॥
दुर्गेषु वणिजः संस्था दुर्गान्ते सिद्धतापसाः ।
कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः ॥
वने वनचराः कार्याः श्रमणाटविकादयः ।
परप्रवृत्तिज्ञानार्थाः शीघ्राः चारपरंपराः ॥
परस्य चैते बोद्धव्याः, तादृशैरेव तादृशाः ।
चारसंचारिणः संस्था गूढाश्चागूढसंज्ञिताः ॥
अकृत्यान् कृत्यपक्षीयैः दर्शितान् कार्यहेतुभिः ।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥

इति विनयाधिकारिके प्रथमे अधिकरणे गूढपुरुषोत्पत्तौ संचारोत्पत्तिगूढपुरुषप्रणिधिः द्वादशोऽध्यायः ।

---

अश्वत्थामा - (विचिन्त्य) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृशमाचेष्टते । तथा हि ।

यद् दुर्योधनपक्षपातसदृशं, युक्तं यदस्त्रग्रहे,
रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य यत्सांप्रतम् ।
लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥

यावत्समरभुवमवतरामि । (परिक्रम्य वामाक्षिस्पन्दनं सूचयित्वा) आः कथं ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्य अनिमित्तानि समरगमनविघ्नमुत्पादयन्ति । (निरूप्य) हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति । कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत् । भवतु, संस्तम्भयामि । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः, कृतं कृतममुना समरपरित्यागसाहसेन ।

यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः,
किमिति मुधा मलिनं यशः कुरुध्वे ?

अपि च ।

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण, व्रज कृप समरं, मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ?

(नेपथ्ये-कुतोऽद्यापि ते तातः ?)

अश्वत्थामा - (श्रुत्वा) किं ब्रूथ - 'कुतोऽद्यापि ते तात' इति । (सरोषम्) आः क्षुद्राः समरभीरवः, कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया ?

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्काः
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे?

---

## ७–१३

विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम्।
कृशानुविश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार॥

तत्र—

कृशानुरकृशासूयः पुरोभाविपदं गतः।
विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी॥

अथ पुरतः समापतन्तमरविन्दबान्धवमवलोकयन्नवन्दतागमसागरपारदृश्वा विश्वावसुः।

विश्वावसुः—

ब्रह्मचर्यव्रतोत्सर्गगुरवे कोकसन्ततेः।
छायाविब्बोकलोलाय छान्दसज्योतिषे नमः॥

कृशानुः—अरे सकलभुवनसंशोषकारिणं तपनमपि किं नमनकर्मीकरोषि? पश्य-

पान्थान् दीनानहह वसुमानातपान्धान् विधत्त
शुष्कां पृथ्वीं रचयतितरां शोषयत्योषधींश्च।
कासाराणां हरति विभवं क्लान्तिशान्तिप्रदानां
क्रूरस्यैवं गुणलवकथा का स्वता भास्वतोऽस्य?

विश्वावसुः—किं रे भगवन्तमरविन्दबान्धवमपि विनिन्दसि? शृणु पुरोभागिन्।

पृष्टिं घृष्टिभिरारचय्य जगतस्तुष्टिं सरिसर्ष्टि यः
पुष्टिं द्राग् विशिनष्टि दृष्टिषु नृणां ध्वान्तं पिनष्टि स्थिरम्।
प्राज्ञानामपवर्गमार्गदममुं पद्मागृहोल्लासिनं
को न स्तौति समस्तलोकसुहृदं द्योभूषणं पूषणम्॥

यदा न पश्यन्ति तमोविमर्दिनं रविं जनास्तत् कथयन्ति दुर्दिनम्।
धिनोति चाम्भोजततिं सरोगतां धुनोत्यसौ देहभृतां सरोगताम्॥

---

## ७–१४

इमा सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यः ताः समुद्रात् समुद्रमेव अपियन्ति स समुद्र एव भवति ता यथा तत्र न विदुः इयमहमस्मि इयमहमस्मि इति ॥ १ ॥

एवमेव खलु सोम्य इमाः सर्वाः प्रजाः सतः आगम्य न विदुः सतः आगच्छामहे इति। ते इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतंगो वा दंशो वा मशको वा यद् यद् भवन्ति तद् आभवन्ति ॥

स य एषो अणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयतु इति तथा सोम्य इति ह उवाच ॥ ३ ॥ इति दशमः खण्डः।

---

## ७–१५

**अर्जुनः** (नारदं प्रति)—महाराज, केनापि साधनेन प्राणानिमांस्त्यक्ष्यामि। लज्जाकृष्णमुखोऽहं जगति व्यवहर्तुमसमर्थः।

**नारदः**–कथमात्मनाशः? त्वादृशेन क्षत्रियेण? शान्तं पापम्। शान्तं पापम्।

**अर्जुनः**–का भीतिः पापपुण्ययोरिदानीं मे महाराज?

**नारदः**–कथमिव? इहामुत्र सौख्यकरमेव कर्तव्यम्।

**अर्जुनः**–तर्हि संन्यासिना मया भवितव्यम्। कन्दमूलानि सेवितव्यानि। वने च चरणीयम्। न पुनरेभिर्जनैः संबन्धः सह्यः।

**नारदः**–योग्या प्रयुक्तिरियम्। तत्रापि किंचिन्मर्म ज्ञातव्यम्। यदि मद्वचनं प्रमाणं तत् कथयामि।

**अर्जुनः**–भवति अविश्वसन् प्राणी कुतोऽस्मिंल्लोके लभ्येत। कथयतु भवान्। उपदेशार्ह एवाहम्।

**नारदः**–शृणुष्व। योऽयं संन्यासस्त्वया स्वीक्रियेत स त्रिदण्डो भवितुमर्हति। एवं कृते प्रारब्धयोगेन तव ईप्सितसिद्धिसमयः प्राप्तश्चेत् तत् पुनरपि गृहस्थाश्रमस्वीकारक्षमः स्थास्यसि।

---

धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः।
निरुद्धबाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥

मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यत्।
आधिद्विषन्मा तपसां प्रसिद्धेरस्मद्विना मा भृशमुन्मनीभूः ॥

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥

लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णन् वसु जैत्रमोजः।
तेजस्विताया विजयैकवृत्तेर्निघ्नन्प्रियं प्राणमिवाभिमानम् ॥

व्रीडानतैराप्तजनोपनीतः निशम्य कृच्छ्रेण नृपैः प्रपन्नः।
वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् ॥

वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम्।
कुर्वन्नयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्तुं न शक्यः किमुताधिकर्तुम्।
नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद्विना मे हृदयं निकारः ॥

प्राप्तोऽभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद्विकारम्।
द्विषत्प्रतापान्तरितोरुतेजाः शरद्घनाकीर्ण इवादिरह्नः ॥

---

# १. परिशिष्टम् ।

## १–संख्यादर्शकशब्दाः ।

| | पुं० | स्त्री० | नपुं० |
|---|---|---|---|
| 1. | एकः | एका | एकम् |
| 2. | द्वौ | द्वे | द्वे |
| 3. | त्रयः | तिस्रः | त्रीणि |
| 4. | चत्वारः | चतस्रः | चत्वारि |

(इतो न लिङ्गादिभेदः)

5. पञ्च
6. षट्
7. सप्त
8. अष्ट
9. नव
10. दश
11. एकादश
12. द्वादश
13. त्रयोदश
14. चतुर्दश
15. पञ्चदश
16. षोडश
17. सप्तदश
18. अष्टादश
19. एकोनविंशतिः
20. विंशतिः
21. एकविंशतिः
22. द्वाविंशतिः
23. त्रयोविंशतिः
24. चतुर्विंशतिः
25. पञ्चविंशतिः
26. षड्विंशतिः
27. सप्तविंशतिः
28. अष्टाविंशतिः
29. एकोनत्रिंशत्
30. त्रिंशत्
31. एकत्रिंशत्
32. द्वात्रिंशत्
33. त्रयस्त्रिंशत्
34. चतुस्त्रिंशत्
35. पञ्चत्रिंशत्
36. षट्त्रिंशत्
37. सप्तत्रिंशत्
38. अष्टात्रिंशत्
39. एकोनचत्वारिंशत्
40. चत्वारिंशत्
41. एकचत्वारिंशत्
42. द्वाचत्वारिंशत्
43. त्रयश्चत्वारिंशत्
44. चतुश्चत्वारिंशत्
45. पञ्चचत्वारिंशत्
46. षट्चत्वारिंशत्
47. सप्तचत्वारिंशत्
48. अष्टाचत्वारिंशत्
49. नवचत्वारिंशत्
    एकोनपञ्चाशत्
50. पञ्चाशत्
51. एकपञ्चाशत्
52. द्वापञ्चाशत्
53. त्रिपञ्चाशत्
54. चतुःपञ्चाशत्
55. पञ्चपञ्चाशत्
56. षट्पञ्चाशत्
57. सप्तपञ्चाशत्
58. अष्टापञ्चाशत्
59. एकोनषष्टिः
60. षष्टिः

| | | |
|---|---|---|
| 61. एकषष्टिः | 79. एकोनाशीतिः | 97. सप्तनवतिः |
| 62. द्वाषष्टिः | 80. अशीतिः | 98. अष्टनवतिः |
| 63. त्रयःषष्टिः | 81. एकाशीतिः | 99. एकोनशतम् |
| 64. चतुष्षष्टिः | 82. द्व्यशीतिः | 100. शतम् |
| 65. पञ्चषष्टिः | 83. त्र्यशीतिः | 200. द्विशतम् |
| 66. षट्षष्टिः | 84. चतुरशीतिः | 300. त्रिशतम् |
| 67. सप्तषष्टिः | 85. पञ्चाशीतिः | 400. चतुःशतम् |
| 68. अष्टाषष्टिः | 86. षडशीतिः | 500. पञ्चशतम् |
| 69. एकोनसप्ततिः | 87. सप्ताशीतिः | 600. षट्शतम् |
| 70. सप्ततिः | 88. अष्टाशीतिः | 700. सप्तशतम् |
| 71. एकसप्ततिः | 89. एकोननवतिः | 800. अष्टाशतम् |
| 72. द्वासप्ततिः | 90. नवतिः | 900. नवशतम् |
| 73. त्रिसप्ततिः | 91. एकनवतिः | 1000. सहस्रम् |
| 74. चतुःसप्ततिः | 92. द्वानवतिः | 10000. अयुतम् |
| 75. पञ्चसप्ततिः | 93. त्रयोनवतिः | 100000. लक्षम् |
| 76. षट्सप्ततिः | 94. चतुर्नवतिः | 1000000. नियुतम् |
| 77. सप्तसप्ततिः | 95. पञ्चनवतिः | 10000000. कोटिः |
| 78. अष्टासप्ततिः | 96. षण्णवतिः | |

**क्रमवाचकानि संख्याविशेषणानि ।—**

प्रथम (अग्रिम, आदिम), द्वितीय, तृतीय, चतुर्थ (तुर्य, तुरीय), पञ्चम, षष्ठ, सप्तम, अष्टम, नवम, दशम, एकादश, द्वादश, त्रयोदश, चतुर्दश, पञ्चदश, षोडश, सप्तदश, अष्टादश, नवदश (एकोनविंशतितम, एकोनविंश), विंशतितम (विंश) इ.

**एतेषां पुल्लिंगरूपाणि—**

प्रथमः (अग्रिमः, आदिमः), द्वितीयः, तृतीयः, चतुर्थः (तुर्यः, तुरीयः),... विंशतितमः, एकविंशतितमः, (एकविंशः),...त्रिंशः (त्रिंशत्तमः), एकत्रिंशत्तमः (एकत्रिंशः),... षष्टितमः, एकषष्टितमः (एकषष्टः), शततमः इ०.

**एतेषां स्त्रीलिंगरूपाणि ।—**

प्रथमा (अग्रिमा, आदिमा), द्वितीया, तृतीया, चतुर्थी (तुर्या, तुरीया), पञ्चमी... एकविंशी, (एकविंशतितमी) इ०.

**एतेषां नपुंसकलिंगरूपाणि—**

प्रथमं, द्वितीयं इ०.

एतानि क्रमवाचकानि विशेषणानि पुल्लिंगे 'देव' वत्, तथा नपुंसकलिंगे 'वन' वत्

प्रचलन्ति। स्त्रीलिंगयुतानि एतानि 'माला' वत् तथा आ' चतुर्थ 'शब्दात् 'विंशत्' यावत् 'नदी' शब्दवत् प्रचलन्ति।

**संख्याविशेषणेभ्यः समूहवाचकाः शब्दाः।—**

द्वयम्, द्वितयम्, द्विकम्, त्रयम्, त्रितयम्, त्रिकम्, चतुष्टयम्, चतुष्कम्. पञ्चतयम्, पञ्चकम्, पञ्चत्-(स्त्री) षट्कम्, सप्तकम्, अष्टकम्, नवकम्, दशकम् (दशत्)-स्त्री.) आ एकादशात् 'क' प्रत्ययप्रयोगात् समूहवाचकरूपाणि भवन्ति।

**आवृत्तिवाचकानि अव्ययानि—**

सकृत् (एकवारं), द्विः (द्विवारं), त्रिः (त्रिवारं), चतुः (चतु) इ० आ पञ्चन्— 'कृत्वः' प्रत्ययस्य उपयोगात् पञ्चकृत्वः, षट्कृत्वः इत्यादीनि आवृत्तिवाचकानि अव्ययानि भवन्ति।

एतेषां उपयोगः षष्ठीविभक्त्या सार्धं भवति।

उदा० दिवसस्य पञ्चकृत्वः, दिवसस्य षट्कृत्वः इ०।

**वीप्सावाचकानि संख्याविशेषणानि।—**

एकशः (एकैकः), द्विशः, त्रिशः, चतुःशः, पञ्चशः इ०

**प्रकारवाचकानि अव्ययानि।—**

एकधा, ऐकध्यम् (एकेन प्रकारेण) द्विधा, द्वेधा, द्वैधम् (प्रकारद्वयेन) त्रिधा, त्रेधा, त्रैधम् (प्रकारत्रयेण) चतुर्धा (चतुर्भिः प्रकारैः) पञ्चधा (पञ्चभिः प्रकारैः) षड्धा-षोढा (षड्भिः प्रकारैः) इ०।

---

# २. परिशिष्टम्।

## अनेकशब्दकृते एकशब्दपर्यायः।

१. माता च पिता च—पितरौ
२. भ्राता च स्वसा च—भ्रातरौ
३. श्वशुरः श्वश्रूः च—श्वशुरौ
४. नरः च नारी च—नरौ
५. पुत्रः च पुत्री च—पुत्रौ
६. स च सा च—तौ
७. मातुः भ्राता—मातुलः
८. मातुः स्वसा—मातृस्वसा
९. मातुः पिता—मातामहः
१०. मातुः माता—मातामही
११. मातृष्वसुः पुत्रः—मातृष्वस्रेयः
१२. पितुः भ्राता—पितृव्यः
१३. पितुः स्वसा—पितृस्वसा
१४. पितुः पिता—पितामहः
१५. पितुः माता—पितामही
१६. पितुः पितामहः—प्रपितामहः
१७. पितुः पितामही—प्रपितामही
१८. पितृष्वसुः पुत्रः—पितृष्वस्रेयः
१९. द्वौ वा त्रयो वा—द्वित्राः
२०. पञ्च वा षट् वा—पञ्चषाः

२१. त्रयो वा चतुरो वा—त्रिचतुराः
२२. अन्यः देशः—देशान्तरम्
२३. अन्या भाषा—भाषान्तरम्
२४. अन्या दिक्—दिगन्तरम्
२५. अन्यत् जन्म—जन्मान्तरम्
२६. अन्यः लोकः—लोकान्तरम्
२७. कुत्सितः नरः—किन्नरः
२८. कुत्सितः पुरुषः—कापुरुषः, कुपुरुषः
२९. कुत्सितं अन्नम्—कदन्नम्
३०. शोभनः गन्धः—सुगन्धः
३१. दातुमिच्छति—दित्सति
३२. पातुमिच्छति—पिपासति
३३. आप्तुमिच्छति—ईप्सति
३४ कर्तुमिच्छति—चिकीर्षति
३५. स्थातुमिच्छति—तिष्ठासति
३६. हन्तुमिच्छति—जिघांसते
३७. द्रष्टुमिच्छति—दिदृक्षते
३८. श्रोतुमिच्छति—शुश्रूषते
३९. ज्ञातुमिच्छति—जिज्ञासते
४०. जेतुमिच्छति—जिगीषते
४१. वक्तुमिच्छति—विवक्षति
४२. लब्धुमिच्छति—लिप्सते
४३. स्मर्तुमिच्छति—सुस्मूर्षते
४४. नमः करोति—नमस्यति
४५. कर्तुं प्रेरयति—कारयति
४६. शेतुं प्रेरयति—शाययति
४७. गन्तुं प्रेरयति—गमयति
४८. शब्दं करोति—शब्दायते, शब्दयति
४९. पुत्रमिव आचरति—पुत्रीयति
५०. छात्र इव आचरति—छात्रायते
५१. वैरं करोति—वैरायते
५२. पत्न्या सह वर्तमानः—सपत्नीकः
५३. परिवारेण सह—सपरिवारः
५४. स्नानाय इदम्—स्नानीयम्
५५. पानाय इदम्—पानीयम्
५६. दानाय इदम्—दानीयम्
५७. सभायां साधुः—सभ्यः
५८. समाने उदरे वसति—सोदर्यः
५९. पाणी च पादौ च—पाणिपादम्
६०. पूर्वं भूतः—भूतपूर्वः

---

# ३. परिशिष्टम् ।

## प्रमादनिरासार्थे पाठः ।

अधोनिर्दिष्टानि वाक्यानि सप्रमादानि । विद्यार्थिभिः प्रमादाः निरस्याः अध्यापक—साहाय्येन । निष्प्रमादरूपाणि निर्दिष्टानि ।

(१) भवान् मम मित्रः असि । (मित्रम्)
(२) श्रावणः प्राणं तत्याज । (प्राणान्)
(३) मित्रं पूर्वस्यां दिशि समुदेति । (मित्रः)
(४) ईश्वरः प्रमाणः । (प्रमाणम्)
(५) अलं खेदाय । (खेदेन)
(६) विंशत्यः बालिकास्तत्र गताः (विंशतिः)

(७) क्रोधेन भवति संमोहः । (क्रोधाद्)
(८) रामस्य सह सीता वनमगच्छत् । (रामेण)
(९) चौराणाम् भयेन नाहं स्वपीमि । (स्वपिमि)
(१०) सर्वान् नमः । (सर्वेभ्यो)
(११) सः तुभ्यं स्निह्यति । (त्वयि)
(१२) पुष्पाणि को न स्पृहयति । (पुष्पेभ्यः)
(१३) अहं नगरे गन्तव्यम् । (मया)
(१४) गुणाः गुणिषु पूजास्पदानि भवन्ति । (पूजास्पदम्)
(१५) अम्बे ! त्राहि माम् । (अम्ब)
(१६) स मयि क्रुध्यति । (मह्यं)
(१७) त्वं मिथ्यां वदसि । (मिथ्या)
(१८) सर्वाः बालकाः गच्छन्ति । (सर्वे)
(१९) पिता च माता च वार्धक्ये परिपालनीयः । (परिपालनीयौ)
(२०) नगरस्य परितः उपवनमस्ति । (नगरं)
(२१) मम वचनं स न विश्वसिति । (वचने)
(२२) सम्राटस्य आज्ञा अनुल्लंघनीया । (सम्राजः)
(२३) रे नृशंस ! धिक् तव । (त्वाम्)
(२४) अष्टानि पुष्पाणि अत्र सन्ति । (अष्ट)
(२५) दधिना सर्वे तुष्यन्ति । (दधिने)

---

# ४. परिशिष्टम् ।

## कति सुभाषितानि ।

१. साहसे श्रीः प्रतिवसति ।
२. किं मिष्टमन्नं खरसूकराणाम् ।
३. अतिपरिचयादवज्ञा भवति ।
४. सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
५. अद्य कपोतः श्वो मयूरात् वरम् । अध्रुवात् ध्रुवं वरम् ।
६. लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ?
७. उत्सर्गाः सापवादाः ।
८. दुखं दुःखानुबन्धि ।
९. विना पुरुषकारेण दैवं न सिध्यति ।

१०. एकः परिश्रमं करोति। अन्यस्तत्फलमुपभुंक्ते।
११. अर्धो घटो घोषमुपैति नूनम्।
१२. उपदेशात् करणं श्रेयः।
१३. यथा बीजं तथांकुरः।
१४. यो यद्वपति बीजं हि लभते सोऽपि तत्फलम्।
१५. उत्सर्पिणी महतां प्रार्थना।
१६. बधिरान्मन्दकर्णः श्रेयान्।
१७. वक्तुं सुकरमिदं दुष्करमध्यवसितुम्।
१८. खलः करोति दुर्वृत्तं तद्धि फलति साधुषु।
१९. भिन्नरुचिर्हि लोकः।
२०. समवायो हि दुस्तरः।
२१. बहूनामल्पसाराणां संहतिः कार्यसाधिका।
२२. अति सर्वत्र वर्जयेत्।
२३. अर्थस्य पुरुषो दासः।
२४. आतुरस्य नियमो नास्ति।
२५. उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः।
२६. उदरनिमित्तं कृतबहुवेषम्।
२७. उद्योगः पुरुषलक्षणम्।
२८. काचः काचो मणिर्मणिः। (काकः काकः पिकः पिकः।)
२९. कृपणस्य धनं याति वह्नितस्करपार्थिवैः।
३०. कोपः पापस्य कारणम्।
३१. जामाता दशमो ग्रहः।
३२. दारिद्रयदोषो गुणराशिनाशी।
३३. नहि सर्वः सर्वं जानाति।
३४. पयसा सिंचितो नित्यं न निंबो मधुरायते।
३५. प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।
३६. मौनं सर्वार्थसाधनम्।
३७. मौनमर्धाङ्गीकारः।
३८. यत्र धूमस्तत्र वह्निः।
३९. शरीरमाद्यं खलु धर्मसाधनम्।
४०. श्वः कार्यमद्य कुर्वीत।
४१. सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
४२. पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणम्।
४३. वरं सांशयिकान्निष्कात् असांशयिकः कार्षापणः।

४४. वृश्चिकभिया पलायमान आशीविषमुखे निपतितः।
४५. अयमपरो गण्डस्योपरि स्फोटः।
४६. इतो व्याघ्र इतस्तरी।
४७. यादृशो यक्षस्तादृशो बलिः।
४८. न हि करकंकणदर्शनायादर्शापेक्षा।
४९. निरामयस्य किमायुर्वेदविदा? नीरुजस्य किमौषधैः?
५०. मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि।

---

# ५. परिशिष्टम्।

## वाक्प्रचाराः।

(वाक्प्रचार : Idioms)

[प्रथमतः संस्कृत-वाक्प्रचारः, पश्चात् नागरीलिप्यां क्रमेण (१) मराठी (२) गुजराती (३) हिन्दी अनुवादः, ततः (४) आंग्ली-अनुवादः च उद्धृताः। संख्याङ्काः भारतीय-शासनघटनानुसारेण अरेबिकपद्धतिकाः। गुजरातीशब्दाः नागरीलिप्यामुद्धृताः।]

| | |
|---|---|
| १. अकृतपूर्वम् | (१) पूर्वी न केलेलें (२) पहेलां न करेलुं (३) पहले नही किया गया (४) Not done earlier (of अभूतपूर्वम्, अश्रुतपूर्वम् See below अदृष्टपूर्वम्.) |
| २. अञ्जलिं बध्द्वा<br>३. अञ्जलिं कृत्वा | (१) हात जोडून (२) हाथ जोडीने (३) हाथ जोड कर (४) With folded hands |
| ४. अत्रान्तरे<br>५. अनया वेलया<br>६. अनेन समयेन | (१) एवढया वेळात, (२) एटला मां, ए समय दरम्यान (३) उस समय में (४) Mean while. |
| ७. अदृष्टपूर्वम् | (१) पूर्वी न पाहिलेलें (२) पहेलां न जोयेलुं (३) पहले नहीं देखा हुआ (४) Not seen earlier. |
| ८. अनुगृहीतोऽस्मि<br>९. उपकृतोऽस्मि<br>१०. महानयं प्रसादः | (१) (आपला) फार आभारी आहे (२) (आपनो) खूब आभारी छुं (३) अनुगृहीत हूँ (४) am obligad, this is a great favour. |

| | |
|---|---|
| ११. अपि कुशली भवान् ? <br> १२. अपि कुशलं भवतः | (१) आपण खुशाल आहात ना? आपले कुशल आहे ना? (२) तमे कुशल छो ने? (३) आप का कुशल तो हैं न? (४) Are you alright? |
| १३. अस्ति मे विशेषो अद्य | (१) आज मला बर वाटत आहे (२) आजे मने सारुं लागे छे (३) आज मुझे अच्छा लगता हैं। (४) I am feeling better today. |
| १४. आगच्छ तावत् <br> १५. इतस्तावत् | (१) इकड़े ये, इकड़े याव (२) अहीं आव (३) यहाँ आइये (४) Come here. |
| १६. आपृच्छस्व <br> १७. आमन्त्रयस्व | (१) निरोप घे (२) रजा ले (३) बिदाई लो, अनुमती लो (४) Take leave |
| १८. आश्चर्यमेतत् <br> १९. चित्रमेतत् | (१) हे आश्चर्य आहे (२) आ तो आश्चर्यकारक छे (३) यह तो अद्भुत है (४) This is surprising |
| २०. इति तस्य मतिः जाता | (१) असा त्याचा समज झाला (२) एवो एणे विचार कर्यो (३) उसने ऐसा सोचा (४) So he thought |
| २१. इति मत्वा | (१) असे मानून (२) एम मानीने (३) ऐसा सोच कर (४) Thinking thus. |
| २२. इति मतिं कृत्वा | (१) असें ठरवून (२) एवो निश्चय करीने (३) ऐसा निश्चित करके (४) Having thus decided |
| २३. इति श्रूयते <br> २४. इति कर्णपथम् आयाति | (१) असे ऐकू येते, असे ऐकतो (२) एम संभळाय छे (३) ऐसा सुनता हूँ (४) So it is heard. |
| २५. कंचित् कालं प्रतीक्षस्व | (१) काही वेळ वाट पहा (२) थोडी वार वाट जो (३) थोडी देर तक प्रतीक्षा करो (४) Wait awhile. |
| २६. कर्णपथं या <br> २७. श्रवणगोचरं या <br> २८. श्रुतिविशेषतां या | (१) कानावर येणे (२) काने पडवुं (३) कर्णपथ पर आना (४) To come to one's ear. |

| | |
|---|---|
| २९. का कथा | (१) काय कथा! गोष्ट कशाला! (२) शी वात (३) क्या बात (४) What to speak of? |
| ३०. का क्षतिः<br>३१. किं छिन्नम् | (१) काय बिघडले? (२) शुं बगडे (३) कौनसी क्षति; क्या नष्ट हुआ? (४) what is lost? |
| ३२. कालान्तरेण<br>३३. गच्छता कालेन | (१) कालान्तराने (२) समय जतां (३) कुछ समय के बाद (४) After some time. |
| ३४. कालोचितं व्यवहर<br>३५. यथाकालं व्यवहर<br>३६. समयोचितं व्यवहर | (१) काळाला अनुसरून वाग, प्रसंग पाहून वाग (२) समय जोईने वर्तन करो (३) समय सोचकर आचार करो (४) Act according to time. |
| ३७. कालं नयति | (१) वेळ घालवतो (२) समय पसार करे छे (३) समय बिताता है (४) Passes time. |
| ३८. किं जातम् | (१) काय झालें? (२) शुं थयुं (३) क्या हुआ? (४) What happened. |
| ३९. किं बहुना | (१) फार कशाला! फार काय सांगावे? (२) वधु शा माटे? (३) अधिक से क्या लाभ? (४) Why more? |
| ४०. किमत्र चित्रम्<br>४१. किमत्र आश्चर्यम्<br>४२. नैतच्चित्रम् | (१) यांत आश्चर्य ते काय? (२) एमां शी नवाई? (३) इसमें कौनसी बड़ी बात (४) What is here surprising. |
| ४३. किमिति चिरायितं त्वया<br>४४. किमिति वेलातिक्रमस्त्वया कृतः | (१) तू उशीर का केलास? (२) तने केम वार लागी? (३) आपने देर क्यों की? (४) Why are you lote. |
| ४५. क्रोधं संहर<br>४६. कोपमपनय<br>४७. रोषं मुञ्च | (१) राग आवर (२) गुस्सो दूर कर (३) क्रोध हटाव (४) Control your temper. |
| ४८. क्षणे क्षणे<br>४९. प्रतिक्षणम् | (१) दर क्षणी (२) हर क्षणे (३) क्षणे २ (४) Evefy moment. |
| ५०. गच्छत्सु दिनेषु | (१) दिवस चालले असतांना (२) दिवसो पसार तथा हता त्यारे (३) काल व्यतीत होते हुए (४) As days passed. |

| | |
|---|---|
| ५१. तूष्णीं भवति<br>५२. मूकतां याति | (१) गप्प होतो. (२) मौन धारण करे छे (३) मौन धरता है (४) becomes silent. |
| ५३. त्वमेव तावत् चिन्तय | (१) तूंच विचार कर (२) तो तुं ज विचार कर (३) तुम सोच लो (४) please think over. |
| ५४. दुःखं मुञ्च<br>५५. विषादं त्यज<br>५६. अलं शोकेन | (१) दुःख सोड (२) शोक छोडी दे (३) शोक छोडो · (४) Give up grief; enough of mourning ! |
| ५७. दैवाधीनम्<br>५८. दैवायत्तम् | (१) दैवावर अवलंबून असलेलें (२) दैव पर आधारित (३) दैव पर निर्भर (४) In the hands of fate· |
| ५९. धैर्यमवलंबस्व | (१) धीर धर (२) धीरज धारण कर (३) धैर्य से रहो (४) Take courage. |
| ६०. नास्ति अन्या गतिः | (१) गत्यन्तर नाही (२) बीजो कोई मार्ग नथी (३) अन्य मार्ग नहीं है (४) There is no other way. |
| ६१. पदम् अनुकरोति<br>६२. पदम् अनुविदधाति | (१) पावलावर पाऊल टाकतो (२) ...ने पगले चालवुं (३) अनुसरण करता है (४) Follows. |
| ६३. पदं कृ | (१) उत्पन्न होणे (२) उत्पन्न थवुं (३) निर्माण होना (४) To Manifest. |
| ६४. पदं करोति<br>६५. पद विदधाति<br>६६. पदं न्यस्यति | (१) पाऊल टाकतो (२) पगलुं मूके छे (३) प्रवेश करता है (४) Steps in. |
| ६७. परमार्थेन ग्रह् | (१) खऱ्या अर्थाने घेणे (२) साचा अर्थमां लेवुं (३) सच्चे अर्थमें लेना (४) To accept in the true sense. |
| ६८. परिणते वयसि वर्तमानः<br>६९. पश्चिमे वयसि वर्तमानः | वार्धक्यात असलेला (२) पाकट उमरनो (३) वयोवृद्ध (४) Aged. |
| ७०. प्रकाशं याति<br>७१. प्राकाश्यं याति | (१) प्रसिद्ध होतो (२) प्रसिद्धि पामे छे (३) प्रसिद्ध होता है (४) Becomes known. |
| ७२. प्रकृतिमापद्यते<br>७३. प्रकृतिप्राप्नोति | (१) पूर्वस्थितीवर येतो (२) पूर्व स्थिति प्राप्त करे छे. (३) पूर्व स्थिति पर आता है (४) Returns to normal. |

७४. प्रतिदिनम्
७५. दिने दिने
७६. प्रत्यहम्
(१) दर रोज (२) दर रोज
(३) हर रोज
(४) Every day.

७७. प्रतीपं भाष् (वद्)
(१) उलट बोलणें (२) विरोध करवो (३) विरुद्ध भाषण करना (४) To 6ppose verbally.

७८. प्रत्युत्पन्नमतिः
(१) हजरजबाबी (२) हाजरजवाबी (३) शीघ्रबुद्धी (४) Ready witted.

७९. प्रथमे वयसि वर्तमानः
(१) तरुण वयाचा (२) युवक (३) युवक (४) Young.

८०. प्रथमः कल्पः
(१) नामी कल्पना (२) सारी कल्पना (३) श्रेष्ठ विचार (४) An excellent rdia.

८१. प्रियं कथयिष्यामि
८२. प्रियमावेदयामि
(१) चांगली बातमी सांगतो (२) प्रिय वात कहुँ छुं (३) सुखकर वार्ता कहता हूँ (४) I shall tell good news.

८३. पिण्डे पिण्डे मतिर्भिन्ना
८४. भिन्नरुचिर्हि लोकः
(१) व्यक्ती तितक्या प्रकृती (२) व्यक्ति ए व्यक्तिनी जुदी मति (३) हर एक व्यक्ति की भिन्न मति (४) Tastes differ.

८५. मनसि कृतम्
(१) विचार केला (२) विचार कर्यो (३) विचार किया, सोच लिया
(४) Thought over; decided.

८६. मा अन्यथा गृहाण
८७. अलमन्यथा गृहीत्वा
(१) गैरसमज करून घेऊ नको (२) गेर-समज न कर (३) गलत मत समझना (४) Do not misunderstand.

८८. यथा तव इष्टम्
८९. यथा त्वमिच्छसि
९०. यत्ते रोचते
९१. यस्ते छंदः
(१) जशी तुझी इच्छा; जसे तुला आवडेल तसे (२) जेवी तारी इच्छा (३) जैसी आपकी खुशी (४) As you like it; as per your desire.

९२. यद् भावि (भविष्यति) तद् भवतु
(१) जे होईल तें होवो (होईल) (२) जे थवानुं हशे ते थशे (३) होने वाले होने दो What is to happen may happen.

९३. वचनानां (शब्दानां) अविषयः
(१) शब्दांच्या पलीकडचा (२) शब्दथी पर (३) शब्दों के पार (४) Beyond words.

९४. वशं याति — (१) ताब्यांत जातो. (२) ...नं वश थाय छे (३) वश होकर रहता है (४) Becomes his partisan.

९५. वशे तिष्ठति — (१) ताब्यांत रहातो (२) वश मां रहे छे (३) वश होकर रहता है (४) Stays in his commend.

९६. संकटम् आपद्यते
९७. व्यसनम् आपद्यते — (१) संकटात सापडतो (२) मुश्केलीमां आवी पडे छे (३) कठिनाई में आता है (४) Gets into difficuities.

९८. समयमनुसरति
९९. समयं पालयति — (१) संकेत पाळतो (२) समयनुं पालन करे छे (३) रूढी का पालन करता है (४) Folllows acceptəd convention.

१००. समुदाचारमनुसरति
१०१. आचारं पालयति — (१) शिष्टाचार पाळतो (२) शिष्टाचारनुं पालन करे छे (३) शिष्टाचार पालता है (४) Behaves according to cusstom.

१०२. स्वभावो दुरतिक्रमः — (१) स्वभाव बदलणे शक्य नाही (२) स्वभाव बदलवो शक्य नथी (३) स्वभाव में परिवर्तन नहीं हो सकता (४) Nature cannot be changed.

---

# ६. अव्ययानि ।

(अव्ययानामर्था : (१) मराठी (२) गुजराती (३) हिन्दी (४) आंग्ली-क्रमेण निर्दिष्टाः । नागरी-लिपी-आश्रयेण प्रथम-द्वितीय-तृतीयाः मुद्रिताः । तथैव उदाहरणानि ।)

१. अचिरम् , अचिरेण, अचिरात् , अचिरे—(१) लवकरच (२) तरतज (३) शीघ्र (४) Soon.
बालकः अचिरं सुप्तः । अचिरेण राजा संज्ञां लेभे । अचिरात् सा प्रतिवचनं ददौ । अचिरे सः तस्य कर्मणः फलं भोक्ष्यते ।

२. अत्र—[अ] (१) येथे (२) अहीं (३) यहाँ (४) Here अत्र अवश्यम् आगन्तव्यम् भवद्भिः ।
[आ] (१) ह्या बाबतीत (२) आ बाबतमां (३) इस विषय में (४) In this matter. अत्र महाराज एव प्रमाणम् ।

३. अतः—(१) म्हणून (२) आथी (३) इस लिये (४) Therefore. निरपराधः सः अतः तं मुञ्चतु भवान् ।

४. अतीव—(१) फार (२) खूब (३) बहुत (४) Very much. कमलपत्रोपरि जलं मौक्तिकमिव अतीव राजते खलु ।

५. अथ—[अ] (ग्रंथारंभे) (१) येथून (२) अहींथी (३) यहीं से (४) From here. अथातो ब्रह्मजिज्ञासा ।

[आ] (१) नंतर (२) पछी (३) इसके बाद (४) Afterwards. भोजनं कुरु अथ पानीयं पिब ।

[इ] (१) प्रश्न विचारताना (२) प्रश्न पूछती वखते (३) प्रश्न के प्रारंभ में (४) While beginning a question. अथ वक्तुं समर्थोऽसि ?

[ई] (१) किंवा (२) अथवा (३) अथवा (४) or.
शब्दो नित्योऽथानित्यः ?

६. अथ किम्—(१) आणखी काय तर? होय असेच (२) वळीं बीजूं शुं? हा, एमज! (३) अलबत (४) Of course! शकारः—चेट, प्रवहणमागतम्? चेटः—अथ किम् ।

७. अथवा—(१) किंवा (२) अथवा (३) अथवा (४) Or.
अथवा साध्विदमुच्यते ।

८. अधुना—(१) आता (२) हमणां, हवे (३) अभी (४) Now. किम् अधुना करणीयम् तद् वद ।

९. अनु—(१) मागाहून, नंतर (२) पाछळथी, पछी (३) उसके बाद (४) Thereafter. जपमनु प्रावर्धत् ।

१०. अन्येद्युः, अपरेद्युः—(१) दुसऱ्या दिवशी (२) बीजे दिवसे (३) दूसरे दिन (४) Next day. अथान्येद्युः (अपरेद्युः) पापबुद्धिः धर्मबुद्धिं समेत्य अवदत् ।

११. अपि—[अ] (१) देखील (२) सुद्धां (३) भी (४) Ever.
इयमधिकमनोज्ञा वल्कलेनापि तन्वी ।

[आ] (१) जरी (२) यद्यपि (३) यदि (४) Also.
पतितोऽपि पुनरुत्थितः ।

[इ] (१) वाक्यारंभी प्रश्नार्थी अव्यय (२) वाक्यना प्रारंभमां प्रश्नार्थ अव्यय (३) वाक्य के प्रारंभ में प्रश्नार्थ (४) At the start of sentence, indicates a question.
अपि तपो वर्धते? अपि कुशली भवान् ।

१२. अपि नाम—(१) असे झाल्यास किति चांगले होईल या अर्थी (२) आम थाय तो केवुं सारुं ए अर्थमां (३) ऐसा होगा तो अच्छा ऐसे अर्थ में (४) In

the sense of 'If would be good if it so happens.' अपि नाम मां सङ्कटात् रक्षेत् स सज्जनः ?

१३. अभीक्ष्णम्—(१) वारंवार (२) वारंवार (३) बार बार (४) Often. क्षते प्रहारा निपतन्त्यभीक्ष्णम् ।

१४. अलम्—[अ] (१) पुरे, नको; (२) बस, वधु नहि; (३) बस हुवा, और नहीं चाहिये । (४) Enough, no more.
(१) आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् ।
(२) अलं महीपाल तव श्रमेण ।
[आ] (१) समर्थ; (२) समर्थ; (३) समर्थ; (४) capable. त्रयाणामपि लोकानामलमस्मि निवारणे ।

१५. असकृत्—(१) अनेक वेळा, वारंवार; (२) अनेक वखत, वारंवार; बार बार. (४) frequently असकृत् निवारितोऽस्मि महाराजेन ।

१६. अहो—(१) वा! अरेरे!, हाय हाय!, शाबास!, अरे, काय हे (२) वाह! हाय हाय! शाबास, अरे आ शुं? (३) शाबास! बहोत अच्छा! यह कैसा (४) excellent, fine, How is that? (१) अहो मधुरमासां दर्शनम् । (२) अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः ।

१७. अहह—(१) दुःख, आश्चर्य, दया दाखविणारे एक केवलप्रयोगी अव्यय. (२) दुःख, आश्चर्य दया दर्शावनारुं एक केवल प्रयोगी अव्यय. (३) दुःख एवं आश्चर्यदर्शक अव्यय । (४) Indeclinable expressing Pain, Pity, surprise etc. (१) अहह दारुणो वज्रनिर्घातः । (२) अहह बुद्धिप्रकर्षो राज्ञः ।

१८. आरात्—[अ] (१) जवळ. (२) पासे (३) नजीक (४) near.
सखायं स्थापयेत् आरात् ।
[आ] (१) फार दूर. (२) दूर (३) दूर (४) Far.
आरात् शत्रोः सदा वसेत् ।

१९. इतः—[अ] (१) येथून. (२) अहीं थी (३) यहां से (४) From here इतो गता सा क्व गता न जाने ।

२०. इत इतः—(अ) इकडून, या दिशेने. (२) अहीं थी; आ बाजुथी (३) यहां से (४) From this side. इत इतो भवान् ।
(आ) इत.........इत (१) एकीकडे.........दुसरीकडे.
(२) आ तरफ.........आ तरफ (३) यहीं......और यहीं. (४) here..........and here. इतः स्वपिति केशवः कुलमितस्तदीयद्विषाम् ।

२१. इतस्ततः—(१) इकडेतिकडे. (२) अहीं तहीं, (३) यहां-वहां, आसमंत में (४) here and there शोकाकुलः राघवः इतस्ततः अभ्रमत् ।

२२. इति—[अ] (१) म्हणून या अर्थी. (२) तेथी (३) इस कारण से (४)

Therefore (१) वैदेशिकोऽस्मीति पृच्छामि (२) पुराणमित्येव न साधु सर्वम्। (३) शरीरस्य विनाशो मा भूदिति मयेदमुत्क्षिप्य समानीतम्।

[आ] (१) (२) (३) समाप्तिदर्शक. (४) Indicating the end. इति प्रथमोऽङ्कः।

[इ] (१) च्या मताने. (२) ना मतानुसार (३) के मतानुसार (४) In the opinion of. (१) इति मनुः।, (२) इति बादरायणः।

[ई] (१) अवतरण संपल्यानंतर चिन्हाऐवजी येणारे अव्यय. (२) अवतरण पुरुं थया पछी " चिन्ह माटे आवतुं, अव्यय (३) अवतरणपूर्तिदर्शक (४) Completing the quotation. तदा रामः अवदत् कुत्र गता सीता इति।

२३. इत्थम्—(१) अशा रीतीने. (२) आवी रीते (३) इस ढंग से (४) Thus इत्थं विचिन्तयति कोशगते द्विरेफे।

२४. इदानीम्—(१) आताच, हल्ली, या बाबतीत. (२) हमणांज, आ बाबतमां (३) अभी, इस विषय में (४) Just now; in this matter. किमिदानीं कर्तुमुचितम् ?

२५. ईषत्—(१) किंचित्. (२) सहेज (३) किंचित (४) a little.
ईषत् कुरुते सेवाम्।

२६. उच्चैः—(१) उंच, वर, उदात्त. (२) उंचुं, उपर, उदात्त, (३) ऊंचा, उदात्त (४) high, up, serene, पश्चादुच्चैः भवति हरिणः। विपद्युच्चैः स्थेयम्। किं पुनर्यस्तथोच्चैः।

२७. उपरि—(१) वरती (२) उपर (३) उपर (४) Above.
गतमुपरि मेघानाम्।

२८. उभयथा—(१) दोन्ही प्रकारांनी. (२) बन्ने रीते (३) दोनों प्रकार से (४) In both ways उभयथापि घटते।

२९. ऋते—(१) शिवाय, पृथक्. (२) सिवाय, विना (३) बगर (४) Without विविक्तादृतेऽन्यच्छरणं नास्ति।

३०. एकशः, एकैकशः—(१) एकेकस्याने. (२) एक पछी एक (३) एक एक से (४) One by one एकशः (एकैकशः) गम्यताम्।

३१. एव—(१) च, केवळ (२) ज, फक्त (३) केवल (४) Only (i) एकमेव (ii) अहमेव तत्र गमिष्यामि।

३२. एवम्—(१) असे, याप्रमाणे. (२) आ रीते, आम (३) इस प्रकार (४) Thus एवमस्तु!

३३. कच्चित्—(१) होय ना? (इष्ट उत्तर येईल अशा अपेक्षेने प्रश्न विचारण्यासाठी उपयोग.) (२) इच्छित जवाब मळशे एवी अपेक्षाथी प्रश्न पूछवा माटे उपयोग

थाय छे। (३) (इष्ट उत्तर के लिये प्रश्न करने के प्रारम्भ में उपयोग (४) (To begin a question for a desired reply)
कच्चित् ते कुशली पिता ?

३४. कथम्—(१) कसे, कशावरून? (२) केवी रीते? (३) कैसे (४) How
कथं मारात्मके त्वयि विश्वासः?

३५. कथमपि—(१) कसेबसे, मोठ्या कष्टाने. (२) जेमतेम करीने (३) किसी न किसी प्रकार से (४) Somehow कथमपि उन्नमितं न चुम्बितं तु।

३६. कदा—(१) केव्हा (२) क्यारे (३) कब (४) When.
कदा त्वां पुनः द्रक्ष्यामि?

३७. कदापि—(१) केव्हाही (२) गमे त्यारे (३) कदापि (४) Any time
कदापि असत्यं वचः मा ब्रूहि।

३८. कामम्—[अ] (१) स्वेच्छेने (२) स्वेच्छाथी, भले. (३) स्वेच्छा से (४) By one's own will.
कामं नृपाः सन्तु सहस्रशोऽन्ये।

[आ] (१) खरोखर (२) खरेखर (३) निःसंशय (४) Indeed; no doubt कामं न तिष्ठति मदाननसंमुखी सा।

३९. किम्—[अ] (१) का? (२) केम (३) क्यों? (४) Why?
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते।

[आ) (१) कोण, काय, कोणता? (२) कोण, शुं, क्युं (३) कौन, क्या. (४) Who, which, what.
किमिव हि मधुराणां मण्डनं नाकृतीनाम्।

[इ] (१) काय उपयोग? (तृतीयेसह) (२) शो उपयोग (तृतीया साथे) (३) किस लिये (तृतीया के साथ) (४) of what use (with instrumental) अन्धस्य दीपेन किम्?

४०. किमु, किमुत—(१) यात काय नवल? तर मग काय सांगावे? (२) एमां शी नवाई? तो पछी शुं कहेवुं? (३) कौन सा विशेष, क्या कहूँ. (४) What can I say? what is so special? यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्॥

४१. किं पुनः—(१) हे कशास सांगावयास हवे? (२) ए शुं कहेवुं पडे (३) क्या कहना (४) Need it be told? दुग्धं स्वभावमधुरं किं पुनः यत् शर्करामिश्रितम्?

४२. किल—[अ] (१) खरोखर (२) खरेखर (३) सचमुच (४) Indeed इदं किल अव्याजमनोहरं वपुः।

[आ] (१) असे म्हणतात (२) एवुं कहेवाय छे (३) कहता है कि (४) So it is said. समुद्रगृहके किल शय्या आस्तीर्णा।

४३. कुतः—[अ] (१) कोठून (२) क्यांथी? (३) कहाँ से (४) Whence कस्य त्वं कुतो वा आयातः ?

[आ] (१) कोठे (२) क्यां? (३) कहाँ (४) Where ईदृग्विनोदः कुतः ?

४४. कुत्र—[अ] (१) कोठे (२) क्यां (३) कहाँ (४) Where कुत्र गतो नु खलु आर्यवसन्तकः ?

[आ] चित्, चन अपि, एभिः सार्धम् प्रयोगे (१) कोठेतरी (२) गमे त्यां (३) कहीं पर (४) Some Where विशिष्टं कुत्रचिद् बीजम्।

४५. कृच्छ्रम्, कृच्छ्रात्, कृच्छ्रेण—(१) मोठ्या कष्टाने, कसाबसा (२) बहु मुश्केली थी (३) किसी न किसी प्रकार से (४) Somehow लब्धम् कृच्छ्रेण रक्ष्यते।

४६. कृतम्—(तृतीया) (१) पुरे, नको (२) बस, हवे नहि (३) बस, पर्याप्त (४) Enough, No more कृतं सन्देहेन।

४७. कृते—(षष्ठी) (१) करिता (२) ने माटे (३) के लिये (४) For the sake of अमीषां प्राणानां.........कृते। काव्यं यशसे अर्थस्य कृते।

४८. क्व—(१) कोठे (२) क्यां? (३) कहां (४) Where (१) प्रिये क्वासि, देहि मे प्रति वचनम्। (२) क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मति। [द्विरुक्त-प्रयोगेन महान् विरोधः प्रतीयते।]

४९. क्वचित्—(१) काही ठिकाणी, काही वेळा (२) केटलेक ठेकाणे (३) कभी कभी (४) Some times, at some place, (१) प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः। (२) क्वचित् गोचरः क्वचित् न गोचरोऽर्थः।

५०. खलु--[अ] (१) खरोखर (२) खरेखर (३) सचमुच (४) Indeed शरीरमाद्यं खलु धर्मसाधनम्।

[अ] प्रार्थना–आवाहन–आदि–सूचने प्रयोगः।

न खलु न खलु बाणः संनिपात्योऽयमस्मिन्।

५१. च—(न वाक्यारंभे प्रयोगः। तथैव प्रतिशब्दानन्तरं सर्वशब्दानंतरं वा प्रयोगः।) (१) आणि, सुद्धा. (२) अने, (३) पण, और, एवं (४) and, also संपत्तौ च विपत्तौ च साधूनामेकरूपता।

५२. चेत्—[न वाक्यारंभे प्रयोगः। वाक्यान्ते वा-अपि-आदिना सह प्रयोगः।]

(१) जर (२) जो (३) यदि (४) If so

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।

५३. जातु—(१) कधीही (२) क्यारेज (३) कभी भी (४) At any time न जातु कामः कामानामुपभोगेन शाम्यति।

५४. झटिति—(१) लगेच, ताबडतोब, वेगाने (२) तरतज, झडपथी (३) लगभग (४) Immediately सः झटिति वृक्षमारुरोह।

५५. तत्र—(१) तेथे, त्या प्रसंगी, तेव्हा (२) त्यां, ते प्रसंगे, त्यारे (३) वहां, तदा (४) There (१) दातुं दुहितरं तस्मै रोचयामास तत्र वै।
(२) यन्मदीयाः प्रजास्तत्र हेतुस्त्वद्ब्रह्मवर्चसम्।

५६. तर्हि—(१) तर, तर मग, तसे असेल तर (२) तो, तो पछी, तेम होय तो (३) Then, (If so-) then यदि भगवान् प्रसन्नः तर्हि इदमस्तु।

५७. तावत्—[अ] (१) तेवढा, तितका (२) तेटलुं (३) उतना (४) That much यावत् शक्यं तावदेव देयम्।
[आ] (१) प्रथम. (२) पहेलुं (३) प्रथम (४) In the first instance.
(१) इतस्तावत्। (२) त्वमेव तावत् चिन्तय।
[इ] (१) तोपर्यंत. (२) त्यां सुधी (३) तब तक (४) Till then. यावत् मम देहे प्राणाः, तावत् न त्वां विस्मरिष्यामि।

५८. धिक् नाम—धिक्कार असो. (२) धिक्कार (३) धिक्कार (४) Fie धिगिमां दरिद्रताम्।
(अपमान-निन्दाकरुणादिप्रदर्शने प्रथमाद्वितीया-षष्ठीसंबोधनप्रयोगः।)

५९. नाम—[अ] (१) नावाचा. (२) नामनो (३) नामक (४) by name. आसीत् दशरथो नाम राजा।
[आ] (१) खरेखर. (२) खरोखर (३) सचमुच (४) Indeed. सर्वे नाम प्राणिनः पञ्चत्वं गच्छन्ति।
[इ] (१) प्रायः (२) घणुं करीने (३) बहुधा (४) Probably. स तापसो नाम भूत्वा तन्नगरं प्रविष्टः।
[ई] (१) खुशाल, जरी. (२) खुशी थी (३) खुशी से (४) willingly करोतु नाम नीतिज्ञो व्यवसायमितस्ततः। (आज्ञार्थेन सह प्रयोगः)।

६०. नितराम्—(१) अगदी, पूर्णपेणे (२) तद्दन, संपूर्ण रीते (३) पूर्ण रूप से (५) Fully. नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः।

६१. नूनम्—(१) नक्की, खात्रीने (२) नक्की, खातरीपूर्वक (३) निश्चित रूप से (४) Certainly. सत्कर्मणः फलं नूनं प्राप्यते एव।

६२. नो चेत्—(१) नाही तर (२) नहि तो (३) नहीं तो (४) If not.
देहि मे पुस्तकम्, नो चेत् पित्रे निवेदयिष्यामि।

६३. परम्—(अ) (१) पण, परन्तु, मात्र (२) पण; परन्तु, (३) किन्तु, लेकिन (४) But. भीमः शूरः आसीत् परं नृशंसो न आसीत्।
(आ) फार, अत्यंत (२) खूब (३) अतीव (४) Very much.
वल्कलं प्राप्य परं संतुष्टा एषा।

६४. परितः—(द्वितीया) (१) सभोवार, सर्वत्र. (२) चारे बाजु, सर्वत्र (३) सर्वत्र, चारों ओर (४) all around. ग्रामं परितो नदी वहति।

६५. पश्चात्—[अ] (१) मागाहून (२) पाछळ (३) बाद में (४) afterwards पश्चाद्वृद्धपुरुषमादाय प्रविशति रक्षकः।

[आ] (१) नंतर (२) पछी थी (३) बाद में (४) later on. लघ्वी पुरा वृद्धिमती च पश्चात्।

६६. पुनः,—[अ] पुनः, आणखी एकदा. (२) फरी थी, फरी एक बार (३) फिर से (४) again. आचार्येण पुनः उक्तम्।

[आ] [१] पण, उलटपक्षी. (२) पण, (३) परन्तु (४) But प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः। अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनी॥

[इ] (द्विरुक्त प्रयोग) (१) वारंवार, अनेकदा. (२) वारंवार (३) बारबार (४) Often. (आत्मानमेव) पुनः पुनर्दुष्कृतिनं निनिन्द।

६७. पुरः—(१) पुढे, समोर. (२) आगळ, सामे (३) सामने (४) In front. अमुं पुरः पश्यसि देवदारुम्।

६८. पुरतः—(षष्ठी) (१) समोर, पुढे. (२) सामे (३) सामने (४) In front. यं यं पश्यसि तस्य तस्य पुरतः मा ब्रूहि दीनं वचः।

६९. पुरस्तात्—(षष्ठीप्रयोग) [अ] (१) प्रथम (२) पहेलां (३) प्रथम (४) First, Foremost. यः पुरस्ताद्यतीनाम्।

[आ] (१) समोर, पुढे (२) सामे (३) सामने (४) In front of. मम गृहं ते पुरस्तात् एव वर्तते।

७०. पुरा—(१) पूर्वी, प्राचीन काळीं (२) प्राचीन समयमां (३) प्राचीन काल में (४) In ancient time. पुरा कवीनां गणना संजाता।

७१. प्रति—(१) कडे, च्या दिशेने (२) तरफ, नी दिशामां (३) ओर, दिशा में (४) Towards. तौ दंपती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः।

७२. प्राक्—(पंचमी) (१) पूर्वी, अगोदरच (२) पहेलां (३) पहिले (४) before गमनात् प्राक् स गुरुं ववन्दे।

७३. प्रायः, } (१) बहुतकरून, साधारणपणे. (२) घणुं करीने (३) बहुधा
७४. प्रायेण } (४) Mostly धनिनः प्रायः (प्रायेण) मदान्धाः भवन्ति।

७५. बलवत्—(१) अत्यंत, फार (२) खूबज (३) बहुत, अत्यंत (४) Very much. बलवदस्वस्थशरीरा शकुन्तला।

७६. भूयः—(१) फार, अत्यंत वारंवार, पुनः (२) खूब, अत्यंत, वारंवार, फरीथी (२) बार बार, अत्यंत, पुनरपि (४) Often, again, more. हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।

७७. भूयो भूयः—(१) पुनःपुनः (२) फरीफरीने (३) बारबार (४) Again and again. श्रीरामचन्द्रं भूयोभूयो नमाम्यहम्।

७८. मिथ्या } (१) व्यर्थ, खोटे, खोटेपणाने (२) व्यर्थ, खोटुं, नकामुं (३) झूठा,
७९. मृषा } (४) False, In vain.

(१) ब्रह्म सत्यं जगन्मिथ्या। (२) नाहं भूयो मिथ्या (मृषा) वदिष्यामि।

८०. मुहुः—(१) पुनःपुनः, वारंवार (२) फरी फरीनो, वारंवार (३) बारबार (४) Frequently again ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः।

८१. यत्—[अ] वाक्यार्थ प्रस्तुत करतांना—'म्हणजे' या अर्थी (२) वाक्यार्ध-प्रस्तुतिमां 'एम' अर्थमां (३) वाक्यार्थ प्रस्ताव में 'जो कि' इस अर्थ में (४) Namely, viz introducing a clause. सत्योऽयं जनप्रवादो यत् संपद् संपदमनुबध्नातीति।

[आ] (१) ज्या अर्थी–त्या अर्थी (२) तो केम (३) तो क्या Since. किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्।

८२. यतः—(१) कारण, ज्या अर्थी, जेथून जेव्हापासून (२) कारण के, ज्यांथी ज्यारथी (३) क्योंकि, जब से (४) because, from when, from where.

(क) निष्कासय भृत्यं यतः असौ अतीव दुराचारः।

(ख) उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम्।

(ग) यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।

८३. यत्र—(१) जेथे (२) ज्यां (३) जहां (४) where प्रायो गच्छति यत्र भाग्य-रहितस्तत्रैव यान्त्यापदः।

८४. यथा—(१) जसे, ज्याप्रमाणे (२) जेम, जे रीते (३) जैसे (४) as...like. यथा राजा तथा प्रजा।

८५. यदा—(१) जेव्हा (२) ज्यारे (३) जब (४) when. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।

८६. यदि—(१) जर (२) जो (३) यदि, जो, अगर (४) if. श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम्।

८७. यावत्—(१) जोपर्यंत, जेवढा, जितका, सर्व (२) ज्यां सुधी, जेटलुं (३) जहाँ तक, जितना (४) as, long as, while.

(१) यावत्तु मानुष्यके शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम्।

(२) यावज्जीवं सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।

८८. युगपद्—(१) एकदम, एकाच वेळी (२) एकी साथे, एक समये (३) एक दफे, एक समय (४) At one time, Simultaneosly तस्मिन् सहस्र-मक्ष्णां युगपत् पपात।

८९. वरम्—(१) पेक्षा बरे (२) करतां सारुं (३) अपेक्षा श्रेष्ठतर (४) Better than. वरमेको गुणी पुत्रो न च मूर्खशतान्यपि।

९०. वा—(१) किंवा (२) अथवा, के (३) अथवा, अन्यथा (४) Or निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु।

९१. विना—(द्वितीया, तृतीया, पंचमी) (१) शिवाय, वाचून (२) सिवाय, विना (३) विना (४) Without. सुराः सुधां विना विरामं न प्रययुः।

९२. शनैः—(१) हळू हळू, क्रमाक्रमाने (२) धीरे धीरे, क्रमे क्रमे (३) आस्ते आस्ते Slowly. gradually शनैर्याति पिपीलिका।

९३. श्वः—(१) उद्या (२) आवती काले (३) कल, आगामी दिन (४) Tomorrow श्वः कर्तव्यमद्यैव करणीयम्।

९४. सकृत्—(१) एकदा (२) एक वखत (३) एक बार (४) Once सकृत् प्रदीयते कन्या।

९५. सदा — (१) नेहमी (२) हंमेशा (३) हंमेशा (४) Always
९६. सर्वदा — (१) सदा धर्मे मतिस्तु ते। (२) सुलभाः पुरुषा राजन् सततं प्रियवादिनः।
९७. सततम् — (३) सर्वदा सर्वदोऽसीति मिथ्या त्वं कथ्यसे बुधैः।

९८. सद्यः—[अ] (१) आज, त्याच दिवशी (२) तेज दिवसे (३) अभी, उसी दिन (४) Now only गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि।
[आ] (१) तावडतोब, लगेच. (२) तेज दिवसे (३) तत्काल, तुरन्त (४) Immediately. पापस्य हि फलं सद्यः।

९९. सपदि—(१) तात्काळ, लगेच. (२) तात्काळ, तरतज (३) तत्काल, उसी क्षण (४) Immediately सपदि उत्थाय स बहिर्गतः।

१००. समम्—(तृतीया) (१) सह, बरोबर (२) साथे (३) साथ (४) With रामेण समं लक्ष्मणोऽपि वनं जगाम।

१०१. सम्यक्—(१) चांगले. (२) सारूं (३) सही, सच्चा (४) Well, Right. अहो! न खलु सम्यक् कृतं तेन।

१०२. सह—(तृतीया) (१) बरोबर (२) साथे (३) साथ (४) With वनं रामेण सीताऽपि अगच्छत्।

१०३. सहसा—(१) एकाएकी, अविचाराने (२) एकाएक, (३) आकस्मिकता से (४) Suddenly; without thought· सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।

१०४. साकम्, सार्धम्—(तृतीया) (१) बरोबर (२) साथे, सहित (३) साथ (४) With केनापि सार्धम् (साकम्) कलहो न कर्तव्यः।

१०५. सुष्ठु—(१) ठीक, चांगल्या प्रकारे (२) ठीक सारी रीते (३) अच्छी तरह से [४] Well सुष्ठु शोभसे आर्यपुत्र अनेन विनयमाहात्म्येन।

१०६. स्थाने—[१] योग्यच, ठीक, खरेच [२] योग्यज, ठीक [३] यथोचित [४] Proper स्थाने प्राणाः कामिनां दूत्यधीनाः। धातोः स्थाने इवादेशं सुग्रीवं संन्यवेशयत्।

१०७. हन्त—[१] आनंद, दया, दुःख आश्चर्य इ० दर्शविणारे अव्यय [२] आनंद दया, आश्चर्य इ० दर्शावतुं अव्यय [३] आनंदादिदर्शक अव्यय [४] Particle expressing wonder etc. हा हन्त हन्त नलिनीं गज उज्जहार।

१०८. हि—[१] कारण, खरोखर, फक्त [२] कारण के खरेखर, फक्त [३] क्यो कि इ० [४] Because, Indeed, only [१] अग्निरिहास्ति धूमो हि दृश्यते। [२] देव, प्रयोगप्रधानं हि नाट्यशास्त्रम्। [३] मूढो हि मदनेनायास्यते।

१०९. ह्यः—[१] काल [२] गई काले [३] गत दिवस [४] yesterday ह्यः कार्यालयं गन्तुम् अहं न समर्था जाता।

---

# ७. परिशिष्टम्।

## विशिष्टविभक्तिप्रयोगाः।

### ले० – डॉ० जशवन्ती दवे

**१ क्रियापदार्थम्।**

केचिद् धातवः विशिष्टविभक्तिप्रयोगानपेक्षन्ते।

**द्वितीयाविभक्तिः।**

सर्वे गतिवाचकाः धातवः द्वितीयाविभक्त्या सार्धं प्रयोज्यन्ते। यथा–
गोपालः ग्रामं गच्छति। रामः वनं व्रजति।

**तृतीया विभक्तिः।**

दिव्—अक्षैः दीव्यति।

**चतुर्थी विभक्तिः।**

१. ईर्ष्य्—दुर्योधनः अर्जुनाय ईर्ष्यति।
२. क्रुध्—सेवकाय क्रुध्यति।
३. द्रुह्—कैकेयी रामाय द्रुह्यति।
४. रुच्—ब्राह्मणाय मोदकः रोचते।
५. स्पृह्—निर्धनः धनाय स्पृहयति।

**पंचमी विभक्तिः।**

१. भी—सिंहात् बिभेति। सिंहात् भयं विद्यते।

**सप्तमी विभक्तिः।**

१. अप + राध्—कस्मिन्नपि पूजार्हेऽपराद्धा शकुन्तला।

२. अभिलष्—तस्मिन्न मेऽभिलाषः।

३. वि + तृ—वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे।

४. स्निह्—किन्नु खलु बालेऽस्मिन् स्निह्यति मे मनः।

**२ अव्ययार्थम्।**

निम्नदर्शितानि अव्ययानि विशिष्टविभक्तिप्रयोगानपेक्षन्ते।

**द्वितीयाविभक्तिः।**

१. अन्तरा – अन्तरा त्वां च मां च कमण्डलुः।

२. अन्तरेण – त्वामन्तरेण कः प्रतिकर्तुं शक्तः।

३. अभितः – राजानमभितः परिजनः स्थितः।

४. उपरि – उपर्युपरि लोकं हरिः।

५. उभयतः – उभयतः कृष्णं गोपाः।

६. परितः – सः वेदीं परितः रक्षांसि निरास्यत्।

७. प्रति – नाहमुत्सुकोऽस्मि नगरगमनं प्रति।

८. विना – वधं विना अरिः न शाम्यति।

९. सर्वतः – सर्वतः कृष्णं गोपाः।

**तृतीयाविभक्तिः।**

१. अलं – अलमतिविस्तरेण।

२. किम् – कलहेन किम्?

३. कृतं – कृतं विस्तरेण।

४. विना – वधेन विना अरिः न शाम्यति।

५. समं – चन्द्रेण समं मुखम्।

६. सह – त्वया सह आगच्छामि।

७. सार्धं – जनकेन सार्धं पुत्रः गच्छति।

**चतुर्थी विभक्तिः।**

१. अलं – अलं मल्लः मल्लाय।

२. नमः – श्रीगणेशाय नमः।

३. स्वस्ति – स्वस्ति प्रजाभ्यः।

४. स्वाहा – अग्नये स्वाहा।

**पंचमी विभक्तिः।**

१. आ – आ मूलात् श्रोतुमिच्छामि ।
२. ऊर्ध्वं – मुहूर्तात् ऊर्ध्वं गमिष्यामि ।
३. ऋते – ज्ञानात् ऋते कुतः मोक्षः ।
४. परं – कालात् परं नास्ति किंचित् ।
५. प्रभृति – बाल्यात् प्रभृति... ।
६. प्राक् – अध्ययनात् प्राक्... ।
७. बहिः – ग्रामात् बहिः ।
८. विना – वधात् विना अरिः न शाम्यति ।

## ३. 'सति सप्तमी' वाक्यरचना।

'यदा रामः वनं अगच्छत् तदा लोकाः दुःखिताः अभवन्' इति वाक्यं 'रामे वनं गच्छति सति, लोकाः दुःखिताः अभवन्' इति अपि वक्तुं शक्यते। इयं रचना 'सति सप्तमी' रचना इति कथ्यते।

**उदाहरणानि।**

१. यदा धर्मांशुः तपति तदा तमः कथमाविर्भविष्यति ? इत्यर्थे—
**'तमस्तपति घर्मांशौ कथमाविर्भविष्यति'।**
२. यदा अहं अस्मि तदा कः चन्द्रगुप्तं अभिभवितुमिच्छति ? इत्यर्थे—
'मयि स्थिते कः चन्द्रगुप्तमभिभवितुमिच्छति ?'
३. यदा त्वं रक्षिता तदा कुतो धर्मक्रियाविघ्नः ? इत्यर्थे—
'त्वयि रक्षितरि सति कुतो धर्मक्रियाविघ्नः'?

## ४. अनादरार्थे षष्ठी।

कस्यचिद् अनादरं उपेक्षां वा कृत्वा अन्यः कश्चित् किमपि अयोग्यं कार्यं करोति तदा 'अनादरार्थे षष्ठी' इति वाक्यरचना प्रयुज्यते। यथा—

१. पश्यतो गुरोः शिष्येण अविनयः कृतः।
२. पश्यतोऽपि मे श्येनेनापहृतः शिशुः।

---

# ८. परिशिष्टम् ।

## तरतमभावः ।

[तर-भावः द्वयोर्मध्ये, तमभावः बहूनां मध्ये च ।]

विशेषणं गुणवत्तां प्रदर्शयति। तौलनिकगुणवत्तां प्रदर्शयितुं तर-तम-प्रत्ययौ संयुज्येते। तत्र द्वौ प्रकारौ। प्रथमः 'तर' 'तम' प्रत्ययान्तः। द्वितीयः ईयस्-इष्ठ-प्रत्ययान्तः।

| १. | विशेषणम् | तरभावरूपम् | तमभावरूपम् |
|---|---|---|---|
| | गुरु | गुरुतर | गुरुतम |
| | महत् | महत्तर | महत्तम |

२. ('ईयस्'—'इष्ठ'—पूर्वं पूर्वस्वरस्य तथा सव्यंजनस्वरस्यापि लोपः भवति।) यथा—

| | | | |
|---|---|---|---|
| (अ) | लघु | लघीयस् | लघिष्ठ |
| | महत् | महीयस् | महिष्ठ |

(आ) कृश, दृढ, पृथु, मृदु, परिवृढ, भृश—विशेषणेषु 'ऋः' 'रः' भवति। यथा—

| | | |
|---|---|---|
| पृथु | प्रथीयस् | प्रथिष्ठ |
| कृश | क्रशीयस् | क्रशिष्ठ |
| दृढ | द्रढीयस् | द्रढिष्ठ |

(इ) स्थूल, दूर, ह्रस्व, स्फिर, क्षिप्र, स्थिर, क्षुद्र—अत्र अन्त्याक्षरलोपः।

| | | |
|---|---|---|
| स्थूल | स्थवीयस् | स्थविष्ठ |
| दूर | दवीयस् | दविष्ठ |
| क्षिप्र | क्षेपीयस् | क्षेपिष्ठ |
| क्षुद्र | क्षोदीयस् | क्षोदिष्ठ |
| स्फिर | स्फेयस् | स्फेष्ठ |
| ह्रस्व | ह्रसीयस् | ह्रसिष्ठ |
| स्थिर | स्थेयस् | स्थेष्ठ |

(उ) मत्, वत्, विन्—प्रत्ययान्त—स्वामित्वदर्शक—विशेषणेषु एतेषां प्रत्ययानां लोपः।

| | | |
|---|---|---|
| बलवत् | बलीयस् | बलिष्ठ |

(ए) अनियमितरूपाणि च इमानि।—

| | | |
|---|---|---|
| अन्तिक | नेदीयस् | नेदिष्ठ |
| अल्प | अल्पीयस्, कनीयस् | अल्पिष्ठ, कनिष्ठ |
| उरु | वरीयस् | वरिष्ठ |
| दीर्घ | द्राघीयस् | द्राघिष्ठ |

| | | |
|---|---|---|
| गुरु | गरीयस् | गरिष्ठ |
| प्रशस्य | ज्यायस्, श्रेयस् | ज्येष्ठ, श्रेष्ठ |
| प्रिय | प्रेयस् | प्रेष्ठ |
| बहु | भूयस् | भूयिष्ठ |
| बहुल | बंहीयस् | बंहिष्ट |
| बाढ, साधु | साधीयस् | साधिष्ठ |
| युवन् | यवीयस्, कनीयस् | यविष्ठ, कनिष्ठ |
| वृद्ध | वर्धीयस्, ज्यायस् | वर्धिष्ठ, ज्येष्ठ |
| वृन्दारक | वृन्दीयस् | वृन्दिष्ठ |

(ऐ) तरभावानां स्त्रीलिंगरूपं 'ई' प्रत्ययान्तम्। 'साधीयसी' इति।
तमभावानां ,, 'आ' ,, । 'कनिष्ठा' इति।
'अ'कारान्तानां स्त्रीलिंगरूपं आकारान्तम्। यथा गुरुतरा, गुरुतमा इति।

(ओ) पञ्चमी विभक्तिः तरभावप्रदर्शने योज्या।
श्रेयो हि ज्ञानमभ्यासात्। चन्द्रात् पृथ्वी गुरुतरा।
तमभावे षष्ठी अथ वा सप्तमी प्रयोज्या।
देवेषु शंकरः श्रेष्ठः पुष्पाणां कमलं तथा।
नक्षत्रेषु शशी प्रेष्ठः। द्राघिष्ठा सरितां गंगा।

(क) यदा तर-तम-प्रत्ययौ क्रियापदेषु, अव्ययेषु, क्रियाविशेषणेषु प्रयोज्यन्ते तदा तयो रूपे 'तराम्' 'तमाम्' इति भवतः।

| | रूप | तर | तम |
|---|---|---|---|
| धातु पच् | पचति | पचतितराम् | पचतितमाम् |
| अव्यय | सु | सुतराम् | सुतमाम् |
| क्रि० विशेषणं | उच्चैस् | उच्चैस्तराम् | उच्चैस्तमाम् |

---

# देववाणीमन्दिरम्

(संस्कृतप्रचारार्थं पंजीकृतविश्वस्तनिधिः ।)

**देववाणीमन्दिरस्य** उद्दिष्टं जनमानसे संस्कृतरुचिनिर्माणम् एव । तदर्थं नाट्य-संगीत-शिक्षादि-कार्यक्रम आयोज्यते । लोकसाह्यमेव अवलम्बते संस्था । वार्षिकं शुल्कं रु. २०/– आजीव शुल्कं रु. २५१ ।

**देववाणीमन्दिरं 'गीर्वाणसुधा'** नाम संस्कृतनियतकालिकं प्रतिमासं प्रकाशयते । डाकसेवाद्वारा वार्षिकमूल्यं रु. १५, आजीवशुल्कं रु. १५१ । विदेले वार्षिकं शुल्कं १५ डॉलर (अमे.) संस्कृतप्रकाशनज्ञापनं संस्कृतकार्यनिवेदनम् अज्ञातसंस्कृतलेखन-प्रकाशनम् च कार्यजातम् नियतकालिकद्वारा साध्यते प्रतिमासम् ।

**देववाणीमन्दिरेण** प्रतिवर्षं संस्कृतदिननिमित्तं बालबालिकानां विविधतापूर्णः संस्कृत-कार्यक्रमः आयोज्यते, अंशभाजां पुरस्कारश्च दीयते । महाराष्ट्रशासनेन तत्र साह्यमपि दीयते ।

**देववाणीमन्दिरस्य** संस्कृतसंगीतसभाः लोकप्रियाः । स्व. पं. विनायकराव पटवर्धन, पं. जितेन्द्र अभिषेकी, सौ. माणिक वर्मा, पं. यशवंत देव, पं. रमेश नाडकर्णी, सौ. निर्मला गोगटे, पं. बाळासाहेब टिकेकर, सौ. सुमती टिकेकर, पं. वसंत पणशीकर, पं. नारायण बोडस, सौ. आशा खाडिलकर, सौ. चारुता वेलणकर आदिभिः कलाकारैः ताः संपादिताः ।

**देववाणीमन्दिरेण** प्रकाशितानि--मेघदूतोत्तरम् (१९७५) संगीत-सौभद्रम् (१९७६) कालिन्दी (१९७६) बालगीतम् (१९७८) संस्कृतरचना (१९८१) स्वातन्त्र्यलक्ष्मीः (१९७९) पाण्डुरङ्गस्मरणम् (१९८०) जीवनसागरः (१९८०) कल्याणकोषः (१९८०).

**देववाणीमन्दिरद्वारा** संस्कृतशिक्षा संस्कृतिशिक्षा च दीयते । अद्य यावत् चतुर्दश-संस्कृतनाटकानि अभिनीतानि । मुंबई, पुणे, नागपूर, देहली, जम्मू, कुरुक्षेत्र, कोल्हापूर इत्यादिस्थानेषु संस्कृतकार्यक्रमाः आयोजिताः ।

(पंजीकृत-समितिः— BCM-301/75 GBBSD-)
(विश्वस्तनिधिः F 3827/Bombay)

## संस्कृतप्रकाशनानि ।

| | | | |
|---|---|---|---|
| बालगीतम्* | रु. १.२५ | सुबोधकथासंग्रहः* | रु. ५ |
| मेघदूतोत्तरम्† | रु. २ | संस्कृतरचना† | रु. १२ |
| स्वातन्त्र्यलक्ष्मीः*† | रु. ६ | संगीतकालिन्दी† | रु. ४ |
| जीवनसागरः† | रु. ६ | पाण्डुरंगस्मरणम् | रु. २० |
| कल्याणकोषः* | रु. ३ | | |

## तथोपलभ्यानि

| | | | |
|---|---|---|---|
| संगीतसौभद्रम्† | रु. ६ | श्रीलोकमान्यस्मृतिः | रु. ६ |
| रामकृष्णविलोमकाव्यम् | रु. १५ | तत् त्वम् असि* | रु. ४ |

* बालककृते (खास मुलांसाठी) † द्वितीय संस्करणम् ।

# वेलणकर-वाङ्मयम्

**संस्कृत**

| | | | | | |
|---|---|---|---|---|---|
| १ | विष्णुवर्धापनम् | (खण्डकाव्यम्) | | १९४७ | (नोर्वरितम्) |
| २ | गुरुवर्धापनम् | ( ,, ) | | १९५३ | रु. १ |
| ३ | जयमङ्गला | ( ,, ) | (अनुवादः) | १९५९ | |
| | | | द्वितीयावृत्तिः | १९७७ | रु. २ |
| ४ | जीवनसागरः | ( ,, ) | | १९६० | |
| | | | द्वितीयावृत्तिः | १९८० | रु. ६ |
| ५ | संगीतसौभद्रम् | (संगीतनाटकम्) | (अनुवादः) | १९६१ | — |
| | | | द्वितीयावृत्तिः | १९७६ | रु. ६ |
| ६ | कालिदासचरितम् | ( ,, ) | | १९६१ | रु. ५ |
| ७–९ | रणश्रीरङ्गः | ( ,, ) | | १९६५ | रु. ६ |
| ७ | कालिन्दी | ( ,, ) | द्वितीयावृत्तिः १९७६ रु. ४ | रणश्रीरङ्ग। | |
| ८ | कैलासकम्पः | गीतनभोनाट्यम् | | | |
| ९ | स्वातन्त्र्यलक्ष्मीः | ,, | द्वितीयावृत्तिः १९७९ रु. ६ | | |
| १०–११ | प्राणाहुती | | | १९६५ | रु. २.५० |
| १० | हुतात्मा दधीचिः | (गीतनभोनाट्यम्) | | | |
| ११ | राज्ञी दुर्गावती | (संगीतनाट्यम्) | | प्राणाहुतीग्रन्थे। | |
| १२ | जवाहरचिन्तनम् | (भावगीतसंग्रहः) | | १९६६ | रु. ७ |
| १३ | विरहलहरी | ,, | | १९६७ | रु. २ |
| १४ | मेघदूतोत्तरम् | (गीतनाट्यम्) | प्रथमावृत्तिः | १९६८ | — |
| | | | द्वितीयावृत्तिः | १९७५ | रु. २ |
| १५–१६ | स्वातन्त्र्यचिन्तामणी | | | | |
| १५ | स्वातन्त्र्यचिन्ता | (गीतनाट्यम्) | | १९६९ | रु. २–५० |
| १६ | स्वातन्त्र्यमणिः | (संगीतनाटिका) | | | |
| १७ | गीतगीर्वाणम् | (संगीतग्रन्थः) | | १९७० | रु. ५ |

१८–१९–२०–२१ तत् त्वम् असि (एकाङ्किकासंग्रहः) १९७२ रु. ४

१८ जन्म रामायणस्य (संगीत-एकाङ्किका)
१९ आषाढस्य प्रथमदिवसे ,,
२० तनयो राजा भवति कथं मे ,,
२२ तत्त्वमसि ,,
(विद्यार्थिकृते)

२२ छत्रपतिः श्रीशिवरायः–संगीतनाटकम् १९७४
द्वितीयावृत्तिः १९७५ रु. १२.५०

२३ संस्कृतसंवर्धनम् व्याख्यानम् १९७५ रु. १

२४ श्रीलोकमान्यस्मृतिः संगीतनाटकम् १९७७ रु. ६

२५ बालगीतम् खण्डकाव्यम् १९७७ रु. १.२५

२६ श्रीरामकृष्णकाव्यम् (संपादितम्) १९७८ रु. १५

२७ संस्कृतरचना (अन्यलेखकेन सह संपादितम्) १९७८
द्वितीयावृत्तिः १९८१ रु. १२

२८ पाण्डुरङ्गस्मरणम् (संपादितम्) १९८० रु. २०

२९ कल्याणकोषः (बालनाट्यम्) १९८० रु. ३

## मराठी

३१ राधामाधव (भावकाव्य) १९७० रु. ४

३२ प्रणयधारा ,, १९७२ रु. ४

३३ स्मरणसुधा (संपादित) १९७८ रु. २५

## इंग्रजी

34 Similes in Rigveda (Translation from German) 1938 (not available)

35 Mail Arrangemants 1974 Circulation restricted

---

देववाणीमन्दिरं प्रष्टव्यं ज्ञापनविशेषार्थम्। मुंबई ४ विभागे।

